accounts left By Chinese monk scholar Heun-tsiang. Even today the thickness of the walls varying from fourteen feet to ten or so can be seen which suggests its original architectural grandeur.

**Monasteries as Educational Centres**

By the increase of Buddhist population in the country and elsewhere the number of the monasteries also increased proportionally. Every village used to have its own *ārāma* or Vihara, and a temple, aften located not very close nor very far from the habitation area. The resident monks of these *vihāras* were tended with the four 'requisites' *(catupaccaya)* by the village devotees. And these monks out of gratitude used to shoulder the responsibility of imparting education to their Upasakas. As time passed these monasteries virtually turned into educational centres and some rose to high standard and became great centres for higher learning. Probably the centres of higher learning were called the *'Mahāvihāra'* or 'great monastery'. Nālandā Mahāvihāra, as the records speak, was perhaps the greatest and most renowned centre of Buddhist blearning where some ten thousand pupils received education. Nalanda is said to possess three huge libraries, viz. Ratnodadhi, Ratnasāgara and Ratnarañjaka. Obviously these libraires of Nalandā Mahāvihāra contained the treatises pertaining to three *Ratnas*, the *Buddha, Dhamma* and *Saṅgha*. There were some othere great Buddhist monasteries in the country for higher learning, Vikramaśila mahāvihāra, Oddantapura Mahāvihāra, Vallabhi, Nadikā etc.

It is interesting to note that these monasteries not only remained as the centres for education but gave shelter to learned monks who used to devote themselves to creat literatures on various fields of learning. Many great Buddhist Pandits were invited to China and Tibet from these monasteries to render the Buddhist texts into their respective languages. Perhaps at present the quantum of the translated works preserved into Chinese is the largest. Presently they are several thousands in number; and if they are rendered back into any Indian language, they would cover at least one crore of pages. The translation of ancient Indian Buddhist texts as preserved in Tibetan language is also stupendous, comprising some ten to twelve lakhs of pages when rendered into any Indian language. We can thus well presume the huge literature that was created by the Pandits belonging to Sramaṇic section of society who received their training and education in the Buddhist monasteries.

**Philosophical Ethos**

The impact of the teachings and practices taught by Buddha has been intense on the humanity of the world. His theory of *Paṭiccasamuppāda* or Dependent

Origination, his Four Noble Truths and his Vipassanā practice has wielded an enduring impact on the minds of a large section of human society of the world. In India when Buddhism was in its heyday, great philosophical and epistemological treatises were created besides many saints who practised spirituality they taught the Path of Truth to all. This cultural stream of India reached the other parts of the world through the zealous efforts of buddhist saints, and there too it attracted the masses of the respective countries. The Buddhist populatin of Sri Lanka, Thailand, Burma. Vietnam, Cambodia, Laos, China, Japan, Tibet, Nepal and Bhutan etc. still adhere to the teachings of the Buddha (Pariyatti) and feel proud of being so. The Buddhist spiritual practices or *Paṭipatti* in the form of *Vipassanā* or meditation or in such other similar way is still popular in these countries although in India it has become obsolete, a matter of past. The important role that this stream of Indian culture played in shaping and enriching our civilization cannot be over exaggerated.



1. Mitra, Debala: *Buddhist Monuments* (1980), p. 9.
2. Of. *Ibid.* figures 9 & 24.
3. Sahani, D. R. Archaeological Remains at Bairat (Jaipur State 1937) pp. 28 ff.
4. Mitra, Debala; Op., cit. p. 61.
5. For *ārāma* and *vihāra* see Upasak : Dictionary of Early Buddhist Monastic Terms.



Fig. 1. First Sermon from Sarnath



Fig. 3. Image of an eighteen-armed goddess from Nālandā



Fig. 4. Image of Buddha from Kurkihar

# भारते संस्कृतभाषा संस्कृतविद्या च


## आचार्यः वि. वेङ्कटाचलम्


[ सिंहस्थपर्वणि दि. 11 मईतः 14 मई 1992 पर्यन्तम् उज्जयिन्यामायोजिते विश्वसंस्कृत-सम्मेलनोद्घाटनावसरे सम्मेलनायोजनसमितेः अध्यक्षपदमलङ्कुर्वाणस्य उद्घाटन-भाषणम् । ]

अथेयमारभ्यते भूतभव्यभवत्कथा कापि भारते संस्कृतभारत्याः संस्कृतविद्यायाश्च ।

विचित्ररूपेयं विशालास्माकं मातृभूमिर्भारतम् । वसन्त्यस्यां नानाविधा जनसमाजाः, येषां वेषो भिद्यते, भाषा भिद्यते, अन्नपानं भिद्यते, भोज्यं भिद्यते, भोजनशैली भिद्यते, आकृतिर्भिद्यते, वर्णो भिद्यते, मुखच्छविर्भिद्यते, गीतं भिद्यते, वाद्यं भिद्यते, नृत्यं भिद्यते, साहित्यं भिद्यते, आचारो भिद्यते, पूजापद्धतिर्भिद्यते, व्रतानुष्ठानं भिद्यते, किं बहुना, सर्वापि जीवनयात्राविधिरामूलचूडं तथा भिद्यते यथा तत्तत्प्रदेशप्रसूतास्ते ते जनाः सर्वत्र सुखेनैव प्रत्यभिज्ञायन्ते । अयं मालवः, अयं काश्मीरः, अयं गूर्जरः, अयं भिल्लः, अयं महाराष्ट्रियः, अयं कर्णाटः, अयं द्रविडः, अयमौत्कलः, अयमसमीयः, अयं वङ्गीयः, अयं पञ्चनदीयः, अयं पर्वतीयः, अयं मरुप्रदेशीयः इत्येवं शाखोपशाखम् ।

काममिदं सर्वं भिद्यते भारते प्रतिप्रदेशं, किन्तु यद्भिद्यते तद् बाहिरङ्गमेव । यस्तु अन्तरङ्गभूत आत्मा भारतस्य स क्वापि कदापि कथमपि न भिद्यते । स चायमात्मा भारतीया संस्कृतिः, या सर्वत्रैकरूपा प्रतितिष्ठति आ कुमार्या आ काश्मीरम् आ च कच्छप्रदेशादा कामरूपम् । अस्याश्च एकरूपाया राष्ट्रियसंस्कृतेर्बहिश्चराः प्राणाः संस्कृतभाषा संस्कृतविद्या च । अत एवास्ति किमपि विशिष्टं माहात्म्यं संस्कृतस्य राष्ट्रैक्यसंपादने, राष्ट्रैक्यसंरक्षणे, राष्ट्रैक्यसंवर्धने च । यदि नास्ति संस्कृतं, नास्ति भारतीया राष्ट्रिया संस्कृतिः । यदि च नास्ति भारतीया संस्कृतिः, तदा नास्त्येव भारतम् । संस्कृतमूलेयं राष्ट्रिया भारतीयधार्मिकसंस्कृतिरेव राष्ट्रगतं सर्वप्रकारकं वैजात्यमेकसूत्रेण संयुनक्ति । संस्कृतसूत्रेण बद्धा इमे विभिन्नाः प्रदेशा नानारूपैर्नानावर्णैर्नानागन्धैः पुष्पतल्लजैः संग्रथिता विचित्रा मालामतल्लिकेव शोभन्तेतराम् । इदमत्रावधेयं सुधीभिः । यथा मालायां चित्रविचित्राणि पुष्पाण्येव दृष्टिपथमायान्ति न तद्धारकं सूत्रम्, यथा वास्मिन् प्रपञ्चे इमा विचित्ररूपा उच्चावचाः जागतिकाः सृष्टय एव दृष्टिपथमायान्ति न तु स भगवान् परमेश्वरो यस्मिन्निदं सर्वमोतं च प्रोतं च तिष्ठति, तथैवेदं राष्ट्रसंधारकं संस्कृतसूत्रं तत्तत्प्रदेशभाषादिमोहच्छुरितमतीनां दृष्टिपथं नायाति । अत एव सर्वं भारतं संस्कृते भवत्येकनीडमितीदं राष्ट्रैक्यरहस्यमजानानाः केचिददूरदर्शिनो राष्ट्रशिक्षातः संस्कृतं बहिष्कर्तुमुद्युञ्जते । वराका इमे तत्तत्प्रादेशिकभाषाभिनिवेशवशीकृता न पश्यन्ति कीदृशो दुर्विपाको भविष्यति राष्ट्रस्यानेन संस्कृतबहिष्करणेनेति । सूत्रच्छेदे हारगता मणयः सर्वे विकीर्य भ्रश्येरन्निति

पामरजनविदितमपि किमेते न पश्यन्ति ? अथवा पश्यन्तोऽपि न पश्यन्ति । तदयमत्र संग्रहश्लोकोऽस्मदीयः –

**मालायाः सूत्रविच्छेदे शीर्यन्ते मणयो यथा ।**
**तथा संस्कृतविच्छेदे राष्ट्रं शीर्येत खण्डशः ॥**

किञ्चान्यत् । अस्य अचिन्त्यरचनावैचित्र्यस्य जगतो मूलरूपमेक ब्रह्मैवेति विस्तरशः प्रतिपादित छान्दोग्योपनिषदि 'ऐतदात्म्यमिद सर्वम्' इति । एतत्तत्त्व स्पष्टीकर्तुं बहवो दृष्टान्ताः प्रदर्शिता उपनिषदि । तत्र मधुनि नानारसाः पुष्परसाः सर्वे ऐकात्म्यं गच्छन्तीत्येको दृष्टान्तः । विभिन्नानां नदीनां नानारूपाणि जलानि समुद्रे एकात्मभाव गच्छन्तीत्यपरो दृष्टान्तः । इद दृष्टान्तद्वयमस्माभिः ततः समाकृष्य भारतीयभाषागतमन्यच्च वैषम्य सर्वमपि सस्कृते निलीयत इति प्रतिपादितं श्लोकद्वयेन–

**नानाम्भसो यथा नद्यः सिन्धौ यान्त्येकरूपताम् ।**
**राष्ट्रवैषम्यमखिलं लीयते संस्कृते तथा ॥**
**यथा मधुनि मज्जन्ति चित्राः पुष्परसाः समे ।**
**तथैवैकात्मतां प्राप्ताः संस्कृते सर्ववाग्रसाः ॥**

अथाधुना सांप्रतमस्माक देशे संस्कृत प्रति समान्यजनानां यादृशी भवति प्रवृत्तिः, तद्विषये काममप्यात्मानुभूतिं किञ्चिद्विवरीतुमिच्छामि । अस्ति नागपञ्चमीति प्रसिद्धमेक पौराणिक व्रतानुष्ठानम् । विशेषतः प्रथत इदं मालवेषु । असकृच्च साक्षात्कृतमिदमस्माभिरुज्जयिन्याम् । अस्मिन् दिने सुप्रभाते नैके आहितुण्डिकाः कृष्णसर्पं करण्डके स्थापयित्वा वीथीषु वीथीषु परिभ्रमन्त उच्चैर्घोषयन्ति, 'नाग पूजयत भोः, नागं पूजयत' इति । गृहद्वारेषु गृहालिन्देषु वा करण्डकमुद्घाट्य नाग प्रदर्शयन्ति । उद्धृतफणस्य सर्पराजस्य पुरतो लघुशरावेषु दुग्ध संस्थाप्य भयमिश्रितेन श्रद्धातिशयेन सुदूरतः स्थित्वा सर्पसपर्यां विदधति ललनाः । अन्ते च भूरिदक्षिणादिवितरणेन सतर्पयन्ति नागराजव्याजेनाहितुण्डिकान् । साक्षात्कुर्वन्ति चैनां नागपूजामन्येऽपि लोकाः स्त्रीबालवृद्धा; पामराः पण्डिताश्च सर्पतो दूरत एव स्थिताः सर्पभयत्रस्ताः । श्रूयते च तस्मिन् दिने पूजाकार्यावसाने पुनश्चारण्येष्वेव यथापूर्व विसृजन्ति सर्पानाहितुण्डिका इति ।

अहन्तावन्मन्ये येयं सर्पपूजा विधीयते नागपञ्चम्या सा भवेदनुरूपमुपमान सांप्रतिकभारते जनानां सस्कृतभाषा प्रति भावनायाः प्रवृत्तेश्च । जनाः श्रद्धते संस्कृते, पूजयन्ति सस्कृतम्, अथवा पूजयितु भृशमुत्सुका भवन्ति, श्रद्धां भक्तिं वा महतीं बिभ्रति । परन्तु दूरत एव स्वां श्रद्धां प्रकटयितुमिच्छन्ति, स्वप्नेऽपि न तत्समीपमुपसप्तुमुत्सहन्ते । सावधानं च परिहरन्ति तत्सामीप्यम् । न केवलमात्मनः परिहरन्ति सामीप्यं, किन्तु स्वान्यपत्यानि बन्धुवर्गान् सुहृदश्च यत्नतो निवारयन्ति तदुपसर्पणात् । सत्यमीदृगेव कापि विचित्रा स्थितिराधुनिकानां मनीषिणां, शिक्षाविदग्रणीनां, शासनतन्त्राधिकृताना-मुच्चाधिकारिणा, राजनीतिकोविदानां महानेतृणां, मन्त्रिप्रभृतीना वा । एते सर्वेऽपि काम धारयन्ति कामपि श्रद्धा संस्कृतं प्रति, वाचा स्तुवन्ति सस्कृतं दूरतः, सोत्साह श्लाघन्ते तद्गुणान् महिमानं च व्याख्यानेषु, न तु कदापि स्वयमधीयते संस्कृतम् । स्वान् पुत्रपौत्रादींस्तु साग्रहं निवारयन्ति

संस्कृताध्ययनात् । इयमेव रीतिः संस्कृतपण्डितानामपि । एते संस्कृतशिक्षका वा प्राध्यापका वा आचार्य वा शिष्यानध्यापयन्ति प्रोत्साहयन्ति च । किन्तु स्वीयानपत्यादीन् निवारयन्त्येव प्रायशः सस्कृताध्ययनमहोपसर्गात् । संस्कृतविद्या सर्पराजवद् दूरतः श्रद्धेयेत्यहो विचित्रः कोऽपि भक्तिक्रमः सर्वेषा जनानाम् । किमनेन श्रद्धाभासेन भक्त्याभासेन वा परप्रतारणमात्रफलेन ? अतो ब्रवीमि–

**पूजयन्ति यथा नागान् श्रद्धया दूरतः स्थिताः ।**
**ललना नागपञ्चम्यां वारयन्ति च बालकान् ॥**
**तथैव हन्त लोकानां निःसारा रसवर्जिता ।**
**निरुपाख्या निर्ममा च मिथ्याश्रद्धाद्य संस्कृते ॥**

नागपञ्चम्याः नागपूजयेव सस्कृतदिवसे सस्कृत प्रति मिथ्याश्रद्धया सस्कृतश्लाघया किं प्रयोजनं सेत्स्यति समाजस्य संस्कृतस्य वा ? ईदृशरिक्तभक्तिस्थाने पुत्रान् प्रति मातुर्या वात्सल्यमयी प्रीतिस्तादृशी अहैतुकी अकृत्रिमा प्रीतिर्यदि संस्कृतं प्रति जननायकाना स्यात्तर्हि महदुपकृत भवेत् सस्कृतस्य । तदैव सामान्यजनानां मनःसु विश्वासो जागरिष्यति सस्कृतस्य माहात्म्यविषये ।

यादृशी दृश्यते समवस्था संप्रति सर्वत्र भारते सस्कृतस्य, ता विलोक्य तु प्रतिभाति संप्रति तिष्ठति संस्कृतविद्या कण्ठगतप्राणेति, अत एवेय भारत एव कदाचिद्, भविष्यति नामशेषेति च । यत्र विद्यालयेषु महाविद्यालयेषु विश्वविद्यालयेषु च संस्कृतमाधुनिकैर्विषयान्तरैः सह नवीनपाश्चात्त्यपद्धत्या अध्याप्यते तत्र सर्वत्रापि प्रायशो नितरां शोचनीयैव स्थितिः संस्कृतस्य । छात्रसंख्याविषये तु चिन्तनमेव कातरभाव जनयति संस्कृतप्रणयिषु । यत्र हि विज्ञानादिषु विषयान्तरेषु बहुशतसहस्रभूयिष्ठाः समवयन्ति विद्यार्थिनः स्वरमतः समाकृष्टाः, तत्रैव सस्कृतकक्ष्यासु विद्यार्थिसंख्या अङ्गुलिमेयैव परिलक्ष्यते । वयन्तु ब्रूमः । आस्तां नामेद संख्यादारिद्र्यम् । तेन किमपि न परिहास्यते सस्कृतस्य, यदीमे विरलसंख्याकाः छात्रा मेधाविनः प्रतिभावन्तः संस्कृते श्रद्धधाना वा स्युः । न त्वेतदस्ति । प्रत्युत सर्वात्मना विपरीतैव जागर्ति स्थितिः प्रायशः सर्वत्र । ये नाम समवयन्ति संस्कृतविभागेषु, ते खलु सर्वत्रान्यत्र अलब्धावसराः ऋजीषकल्पाः प्रविशन्ति संस्कृतकक्ष्यासु । 'येषां गत्यन्तरं नास्ति तेषां नः संस्कृतं गतिः', इत्यात्मनि ग्लायन्तो हतोत्साहा इमे कथमप्यहानि गणयन्ति संस्कृतमधीयानाः । इत्थंगते अध्यापका अपि न क्षमन्ते तेष्वात्मविश्वासमुत्साहं वा जागरयितुम् । क्वचित्तु "यक्षानुरूपो बलिः" इति न्यायेन अध्यापका अपि छात्रतुल्यामेव गायन्ति ग्लानिगीतिमिति नातिभिद्यन्ते छात्रेभ्यः ।

अथ प्राचीनपारम्पर्यक्रमायातेषु विद्यालयेषु कुर्मः कटाक्षपातं किञ्चित् । दैवान्मया समासादितोऽभूदवसरः कश्चिदीदृशेषु विश्वविद्यालयेषु कनिष्ठिकाधिष्ठितं प्राचीनतम वाराणसीस्थं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयं स्वयमध्यक्षयितुम् । साम्रेडं च अवालोकिषत बहुधा मया निकटतो बहूनि प्राचीनसंस्कृतविद्याधिष्ठानानि विभिन्नेषु प्रदेशेषु व्याप्रियमाणानि । एतदनुभवबलेन प्रतिज्ञातुमलमस्मि यत् सर्वत्रापि देशे प्राचीनशास्त्राध्ययनं पिपतिषत् कूलमिव नश्यदवस्थापन्नं तिष्ठति, अद्य वा पतेत् श्वो वेति । अवश्यमिदमपि वक्तुमुत्सहे प्रसङ्गेऽस्मिन् यद् बहुषु स्थानेषु कदा कदाचिद् मेघमालामध्ये विद्युत्प्रभेव दृश्यत एव तरुणेषु छात्रेष्वपि नयनविद्योतिनी प्रतिभारेखा । नायमवसरो विस्तरस्येति विस्तराद् बिभ्यदियन्मात्रं वच्मि निष्कर्षरूपम् । बहुषु प्रदेशेषु निर्वाण एव वेदाध्ययनदीपः,

निर्वाणभूयिष्ठं च शास्त्राध्ययनवीर्यं सर्वत्र, निर्वास्यमानं च तिष्ठति यच्च किञ्चिदवशिष्यते प्राचीन-संस्कृतविद्यादीपशिखायाः। अयमत्र पिण्डितार्थः—वेदाध्ययनपरम्परा तावत् क्वचिद्विच्छिन्ना, क्वचिच्च शिथिला। शास्त्राणां प्रौढपाण्डित्यं पुनः प्रायशो मृगतृष्णिकायते सर्वत्र।

ईदृग्विधे सस्कृताध्ययनव्यतिकरे बहवः प्रश्नानवतारयन्ति बहुविधान्। तथा हि अग्रे किं भविष्यति संस्कृतविद्यानाम्? कथं जीविष्यति संस्कृतभाषा? कथं नाम जीविष्यन्ति संस्कृतविद्याः? यदा विद्यालया एव क्रमशो रिक्ता भवन्ति, तदा कथमवशिष्यते विद्या? 'शुष्के नीरे कः कासारः?' अत एव अवश्यंभाविनीं सर्वविद्याक्षतिमनुचिन्त्य दूयन्ते भूयांसः संस्कृतप्रणयिनः। पूर्वजातं विविधविद्याविलोपं निदर्शनीकुर्वन्त इमे इत्थं विचारयन्ति—यथा भगवता पतञ्जलिना स्पष्टं परिगणिता वेदशाखा भूयसा खिलीभूताः संप्रति, यथा वा सर्वकार्यसाधनसमर्था परमाद्भुता रहस्यमयी भारतीया मन्त्रविद्या विस्मृतिकुहरे विलीना, यथा परमाश्चर्याणि रसायनानि संप्रति ग्रन्थपृष्ठमात्रमलङ्कुर्वन्ति, साप्तभौमानि ततोऽप्यधिकभूमिकानि गृहाणि यदवलम्ब्य निर्मितानि तादृशं वास्तुशास्त्र यथा विलुप्त, यथा मोहन्-जो-दारो-हरप्पा-प्रभृतिषु प्राचीनेषु विध्वस्तेषु नगरेषु प्रत्यक्षीक्रियमाणं नगरनिर्माणकलावैभव मूलतो विच्छिन्नमस्मद्देशे, तथैवाधुना यदवशिष्यते तदपि सर्वात्मना विनङ्क्ष्यतीति।

अहन्त्वस्मिन् विषये किञ्चिदन्यदेव चिन्तयामि। भारते सस्कृतभाषा कदापि सर्वात्मना न नङ्क्ष्यतीत्यस्ति मे दृढः प्रत्ययः। किमधीनोऽय विश्वास इति चेत् श्रूयताम्। चक्रनेमिक्रमेण नीचैरुपरि च पर्यायेण गच्छत्येव समवस्था सर्वस्यापि वस्तुनः। अयन्तावन्नियतिकृतो नियम.। अत एव सस्कृत-विद्यापि नास्यापवादो भवितुमर्हति। अतश्च संप्रति नीचैर्गता सम्स्कृतविद्या अग्रे पुन समृद्धि यायादिति सभाव्यत एव।

किञ्चिदन्यदप्यस्ति विशिष्ट कारणं संस्कृतविद्याया अवश्यभाविन्या भविष्यदुन्नतेः। अस्त्यस्या भाषायां तदाश्रितासु च विद्यासु किमप्यसाधारण लोकोत्तर सामर्थ्यमविच्छिन्नतया जीवितुमित्यत्र अस्याः पूर्वेतिहास एव दुरपलापं प्रमाणं मन्ये। यथेयं भाषा भारतवर्षे प्रायशो दशवर्षसहस्राणि निरन्तरतया प्रवहमानास्मानुपगता संप्रति, तादृशी काप्यन्या भाषा क्वापि जगति न श्रुतपूर्वा। यदेयं बहुवर्षसहस्राणि अविच्छिन्नधारं व्यवहारपदे स्थिता, तर्हि कथन्नाम कश्चित् श्रद्धत्ताम् इय सप्रति झटित्येव तिरोधास्यतीति?

संस्कृतभाषायाः स्वात्मभूतां परमाश्चर्यकारिणीमीदृशीं जीवनशक्तिं वर्णयितुमस्ति मदीया स्वोपज्ञा कापि कल्पना। तामेनामिह प्रस्तौमि सहृदयानां पुरतः। अहन्तु ब्रवीमि संस्कृतभाषायाः शक्तिरेषा मण्डूकसदृशीति। मण्डूकाः किल जले स्थले चोभयत्र स्वैरसंचारिण इति तु सर्वविदितमेव। अत एवेमे आधुनिकैः प्राणिवैज्ञानिकैः एम्फिबिया (Amphibia) इति तच्छास्त्रपरिभाषितायां जातौ परिगण्यन्ते। यद्यपीमे उभयत्र संचरणसमर्थास्तथापि जलवासपक्षपातिनः प्रायशो जलस्थानेषु बृहत्सु लघुषु वा जीवन्तीत्यपि विदितचरम्। किन्तु कठोरे ग्रीष्मकाले शुष्केषु जलस्थानेषु मण्डूकाः कुत्र जीवन्ति कथ वा जीवन्तीति चेत्, अत्राहुराधुनिकाः प्राणिवैज्ञानिकाः। केचित् प्राणिनो हेमन्तकाले शैत्यमसहमानाः निष्क्रियाः स्तब्धा दीर्घनिद्रिता अवतिष्ठन्ते क्वचिदसूर्यंपश्यं गृहकोणं शरणीकुर्वाणाः, यथा सरटकृकलास-प्रभृतयः। अन्ये केचिदेतद्विपरीताः ग्रीष्मर्तौ तापमसहमानाः स्तब्धा निष्क्रियाश्च तिष्ठन्ति दीर्घनिद्रामिव

गताः, यथा प्रकृता मण्डूकाः । पूर्वां हेमन्तनिद्रा (winter sleep) इति, अपरां ग्रीष्मनिद्रा (summer sleep) इत्यपि च कदाचिद् व्यवहरन्ति सामान्यतः । शास्त्रे तु तामेतामुभयी स्थिति 'हैबरनेशन्' (hibernation) इति, 'इस्टिवेशन्' (aestivation) इति च पारिभाषिकशब्दाभ्यां व्यवहरन्ति प्राणिवैज्ञानिकाः ।

प्रकृते च मण्डूकाः ग्रीष्मे जलह्रासेन प्रथममार्द्रेषु पङ्केषु शरणं गतास्तत्र निश्चल जीवन्ति । पश्चाद् यदा तु पङ्का अपि शुष्का भवन्ति तदा ते तत्रैव शुष्कपङ्केषु निलीनाः प्रायशः पङ्कभावमिवापन्नाः समग्रं ग्रीष्मं यापयन्ति । नास्यामवस्थायामिमे खादन्ति, पिबन्ति, शृण्वन्ति, वदन्ति वा । न वा लेशतोऽपि चलितुं क्षमन्ते । अत एव ग्रीष्मकाले शुष्कसरांसि सर्वाण्यपि विरतमण्डूकगीतानि नीरवाणि तिष्ठन्ति । परन्तु ग्रीष्मात्यये यावदेव देवो वर्षति तावदेव वर्षावारिभिरुक्षिता इमे मृत्तिकामण्डूका. प्रथमोद-बिन्दुभिरेव आप्यायिताः पुनः प्राप्तप्राणा. क्रमोपचितसत्त्वाश्च पूर्ववन्मुखरभावमापन्ना नक्तन्दिव-मुच्चैरारटन्तः प्रसिद्धा मण्डूकप्लुतिमिवाभ्यस्यन्तः पुनर्दृष्टिपथमायान्ति लोकस्य ।

तदिदं मण्डूकानां जीवनविषयकं वैज्ञानिकं रहस्यं प्राक्तनैर्भारतीयैर्विद्वद्भिरपि सम्यग्विज्ञातमासीत् । तदाहुः सर्वतन्त्रस्वतन्त्रा वाचस्पतिमिश्रा ब्रह्मसूत्रभाष्यव्याख्याया भामत्यां 'यथा च वर्षापाये प्राप्त-मृद्भावानि मण्डूकशरीराणि तद्वासनावासिततया घनघनाघनासारावसेकमुहितानि पुनर्मण्डूकदेहभाव-मनुभवन्ति' इति । कृशतरचर्मभस्त्रिकाप्रायाणा ग्रीष्मशोषिताना मण्डूकाना पुनः प्राणागमवृत्तान्तोऽयम् ऋग्वेदीये मण्डूकसूक्तेऽपि पद लभते । श्रूयतामियम् ऋषिगीता मण्डूककथा मन्त्रेऽस्मिन्-

**दिव्या आपो अभि यदेनमायन् दृतिं न शुष्कं सरसी शयानम् ।**
**गवामह न मायुर्वत्सिनीनां मण्डूकानां वग्नुरत्रा समेति ॥**

इत्थमस्मद्ग्रन्थपरम्परायाम् आ ऋग्वेदादनुवृत्त मध्ये शास्त्रकारैरपि समुल्लिखित यन्मृतप्रायाणां मण्डूकानां मृतसञ्जीवनरहस्यमुपवर्णित तदेव युक्तरूपमुपमानमुत्पश्यामः संस्कृतभाषाया जीवनशक्ति-रहस्यस्य। अत एव मन्यामहे पूर्वपूर्वां प्राणशक्ति पुनः पुनरासादयन्ती नःसंस्कृतभाषा सत्यं मण्डूकायते । ग्रीष्मप्रख्येषु प्रतिकूलेषु कालेषु मूर्च्छां गतेव, स्तब्धेव, निश्चेष्टेव, एडमूकेव, जनैरलक्षितेव, अनादृतेव, भर्त्सितेव, धिक्कृतेव, मृतप्रायेवावस्थायापि संस्कृतभाषेय दैववशाद् वर्षागमवदनुकूले समये समागते सद्य एव सम्पूर्णा प्राणशक्तिं सप्राप्य पुनरपि पूर्वतनीं ततोऽप्यधिका वा शोभासमृद्धिमवश्यमेव भोक्ष्यत इति दृढं विश्वसिमः । तदेषा मण्डूकसच्छाया संस्कृतस्य प्राणशक्तिः संदृब्धास्माभि. श्लोकद्वयेन—

**कासरे रिक्तनीरे प्रखरतरशुचौ प्राप्तमृद्भावमूर्च्छा**
**मण्डूकाः शुष्कचर्मोन्मथितदृतिनिभाः शेरते स्तब्धमूकाः ।**
**पश्चाद् वर्षासु वर्षद्घनरससुहिताः पूर्ववद् दीप्तवीर्या**
**भूयः संभूय मत्तोद्भटपटुरटनैर्विश्वमाच्छादयन्ति ॥**
**एवं वाक् संस्कृतापि प्रतिभटविषमग्रीष्मभीष्मे कुकाले**
**विद्यास्थानेषु कष्टां स्थितिमिह गमिता भूमिगर्ते निखाता ।**

**स्थित्वा संमूर्च्छितेव प्रमुषितहृदयेवापि हंहो ! मृतेव**
**प्राप्ते कालेऽनुकूले ननु पुनरुदियादूर्जितप्राणसारा ॥**

न कापि लौकिकी शक्तिरेनां भाषां विद्यां वा समूलमुच्छेत्तुमलमिति तु परमार्थः। अस्ति विचित्रा दैवी प्राणशक्तिरस्यां संस्कृतभाषायां यया सा छिन्ना भिन्नापि न म्रियते, रामायणे विराध इव; समूलमुत्खातापि पुना रोहति क्वाप्यन्यत्र, दूर्वाकाण्ड इव; खण्डितापि पुनः सन्धत्ते कथमपि, महाभारते जरासन्धशरीरमिव; पशुमारं मारितापि प्रतिरुणद्धि सर्वान् प्रहारान् महाभारते गान्धारीतपसा वज्रीभूतं दुर्योधनशरीरमिव । मन्ये गीतासु आत्मविषये यन्निगदित तत्संस्कृतविषयेऽपि प्रकारान्तरेण सुयोज्यमिति–

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः॥**
**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः॥**

तामेनां परमाद्भुता शाश्वतीमिव जीवनधारणशक्तिमभिध्यायैव मन्ये पूर्वेऽस्माकं मनीषिणो महर्षय इमां संस्कृतभाषां सर्वेभ्यो भाषान्तरेभ्यो व्यावर्तयन्तो देवभाषेत्यपूर्वेण नाम्ना महयांचक्रिरे । अत एवाहाचायदण्डा–

**संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः। इति।**

कथमन्यथा विद्यमानासु नैकासु भाषास्वन्यासु इमा केवलाममरवाणीमाचचक्षिरे इति स्वयमेव विमृशन्तु कारणमस्या अपूर्वाभिधानस्य ।

किञ्चान्यत् । चित्रमिद प्रतिभाति यदापण्डितपामरम् आबालगोपालमिय धारणा निरूढा प्रथते सर्वत्र भारते यद् देवाः स्वर्गलोके व्यवहरन्त्यनयैव भाषयेति । अत एव महाकविः श्रीहर्षोऽप्युत्प्रेक्षांचक्रे यद् दमयन्तीस्वयंवरे समवेताः सर्वे भूपालाः परस्परप्रदेशभाषानवबोधक्लेशं परिहर्तुं स्वयमेव संस्कृतभाषया व्यवजह्रुरिति, तेन च तत्र समागतानां देवानामिन्द्रादीना भाषामूला प्रत्यभिज्ञा न समभाव्यतेति–

**अन्योऽन्यभाषानवबोधभीतेः संस्कृत्रिमाभिर्व्यवहारवत्सु।**
**दिग्भ्यः समेतेषु नरेषु वाग्भिः सौवर्गवर्गो न जनैरचिह्नि ॥**

श्लोकस्यायमभिप्रायः । स्वयंवरमण्डपे न केवलं भूलोकगता राजानः किन्तु देवलोकादिन्द्रादयो देवा अपि समवेता अभूवन् । यदि मनुष्यलोकस्था राजानः स्वस्वभाषया व्यवाहरिष्यन् तर्हि संस्कृतभाषया व्यवहरन्तो देवा मनुष्येभ्यो भिन्नतया जनैर्झटिति प्रत्यभिज्ञाता अभविष्यन् । किन्तु मनुष्या अपि तत्र संस्कृतेनैव व्यवाहार्षुः, यतस्ते परस्परस्य भाषां नाज्ञासिषुः । इत्थंगते विचित्रे व्यतिकरे सर्वेषां भाषैक्याद् जनाः देवान् पृथक्त्वेन प्रत्यभिज्ञातुं नापारयन्निति । अस्मिन् नैषधश्लोके देवानां भाषा संस्कृतमित्यर्थस्तु स्पष्ट एव ।

●

# व्यवहारसंस्कृतम्

## प्रो. कृष्णशास्त्री कानिटकरः

### संस्कृतभाषा

व्याकरण-सूत्र-वार्तिक-भाष्यैर्विस्मायितं जगद् यैस्तान् ।
संस्कृतभाषाचार्यान् पाणिनि-वररुचि-पतञ्जलीन् वन्दे ॥ १ ॥
भाषा जनमनोभावसाधुप्रेषणसाधनम् ।
नोपायस्ता विनान्योऽत्र सुगमो निश्चितश्च यः ॥ २ ॥
भाषामूलं भवेद् वाक्यं वाक्यमूलं पदं भवेत् ।
सुबन्तं च तिङन्तं च पाणिनीये पदं मतम् ॥ ३ ॥
पदमूलं भवेच्छब्दः स शब्दो वर्णमूलकः ।
स्फुटार्था ध्वनयो वर्णा मानवाननिःसृताः ॥ ४ ॥
शिवसूत्रेषु ये वर्णा द्विचत्वारिंशदेव ते ।
स्वरा नव, त्रयस्त्रिंशद् वर्णेषु व्यञ्जनानि च ॥ ५ ॥
अकाराद्याः स्वराः प्रोक्ताः कादीनि व्यञ्जनानि च ।
आकाराद्या अकारादेर्भेदा दीर्घप्लुतात्मकाः ॥ ६ ॥
ह्रस्वादयः स्वरेष्वेव भेदास्ते व्यञ्जनेषु न ।
आचार्यैर्भूषिता भाषा ख्याता संस्कृतसंज्ञया ॥ ७ ॥
भाषाङ्कनोपयुक्तानि चिह्नानि लिपिरुच्यते ।
लिपिः संस्कृतभाषायाः प्रसिद्धा देवनागरी ॥ ८ ॥
द्विधा संस्कृतभाषेयं वैदिकी लौकिकी तथा ।
वैदिकी वेदभाषोक्ता लोकभाषा च लौकिकी ॥ ९ ॥
उल्लेखो योऽस्ति वैदिक्याः स वेदच्छन्द-आदिभिः ।
भाषाशब्देन निर्दिष्टं लोकभाषितसंस्कृतम् ॥ १० ॥
शास्त्रे सर्वशब्दोऽस्ति वेदलोकोभयार्थकः ।
अल्पीयस्येव वैदिक्या लौकिक्यां चास्ति भिन्नता ॥ ११ ॥

## व्यवहारसंस्कृतस्वरूपम्

नाम्ना भाषासंस्कृतमथवा व्यवहारसंस्कृतं यत्तत् ।
समुपन्यस्यामि पुरः सदसद्व्यक्त्यै मनीषिणो मान्याः ॥ १२ ॥
चत्वारिंशतमब्दान् संस्कृतसंलापसरलतासिद्ध्यै ।
चिन्तितमिह संक्षिपतिच्छात्रः कानिटकराभिधः कृष्णः ॥ १३ ॥
इह संस्कृतभाषायाः साहित्यिकमेव रूपमधुनास्ति ।
सा जनभाषाशु स्याद् येन भवेद् भारते जगति चैक्यम् ॥ १४ ॥
सर्वैः सर्वत्र भाष्येत भाषा चेत् संस्कृतं भुवि ।
सह सम्बन्धिमित्राद्यैर्यात्रापणगृहादिषु ॥ १५ ॥
सुगमं संस्कृतमेव प्रतिष्ठितं यदि भवेज्जनेष्वादौ ।
नूनं प्रौढमपि स्यात् कदापि काले प्रतिष्ठितं क्रमशः ॥ १६ ॥
द्विविधं संस्कृतरूपं सुगमं प्रौढं च लभ्यते तत्र ।
आदौ यत् सुगमं तत् सर्वं प्रस्तूयते परीक्षार्थम् ॥ १७ ॥
भाषासंस्कृतमिति यच्चतुर्विधं तस्य कल्प्यते रूपम् ।
कालावधिसहितं तत् क्रमशोऽधस्तान्निरूप्यते सर्वम् ॥ १८ ॥

### एकस्मिन् दिने समापनीया योजना

"भाषासंस्कृतबोधः" समापनीयो दिनेऽयमेकस्मिन् ।
सम्पत्स्यते तथाल्पः संस्कृतसाहित्यबोधोऽपि ॥ १९ ॥

### दशसु दिनेषु समापनीया योजना

दिवसेषु दशसु पूर्णः स्याद् "भाषासंस्कृतप्रवेशो"ऽयम् ।
संस्कृतसाहित्यस्य ज्ञानं सह तेन विस्तरेणेषत् ॥ २० ॥

### त्रिंशति दिनेषु समापनीया योजना

त्रिंशति दिनेषु पूर्णः स्याद् "भाषासंस्कृताभ्यासः" ।
संस्कृतसाहित्यस्य ज्ञानं च सविस्तरमभीष्टम् ॥ २१ ॥

### शते दिनेषु समापनीया योजना

दिवसेषु शते पूर्णा छात्राणां "संस्कृतप्रतिष्ठा" स्यात् ।
संस्कृतसाहित्यस्य ज्ञानमधिकविस्तरेण चाभीष्टम् ॥ २२ ॥

### व्यवहारसंस्कृतविषये क्रमशो विचारः

वाक्यं सदान्ततो गत्वा क्रिययैव समाप्यते ।
क्रियाविषयकं किञ्चिदत आदौ विचार्यते ॥ २३ ॥

**अकर्मकेषु आवश्यकक्रियावाचकरूपाणि**

खेलनं खेलनीयं च खेलकः खेल्यते ततः ।
खेल्यतामित्यथो रूप प्रखेल्याथास्ति खेलितम् ॥ २४ ॥
खेलित्वा खेलितु चाथ रूप खेलिष्यते मताम् ।
अस्त्यखेलिष्यतेत्यन्त्यं रूपमेकादशं तथा ॥ २५ ॥
रूपाण्यकर्मकेऽमूनि भाषासस्कृतजीवितम् ।
अस्-भू-कृधातवः सन्ति बहूद्दिष्टोपकारका. ॥ २६ ॥

**सकर्मकेषु**

पठन पठनीय च पाठकः पठ्यते ततः ।
पठ्यता पठ्यमानं च प्रपठ्य पठित तथा ॥ २७ ॥
पठित्वा पठितु चाथ रूपमिष्ट पठिष्यते ।
रूप पठिष्यमाण स्यादपठिष्यत चान्तिमम् ॥ २८ ॥
सकर्मकेऽसवो भाषासस्कृतस्य त्रयोदश ।
अस्-भू-कृधातव. सन्ति बहूद्दिष्टोपकारकाः ॥ २९ ॥

**णिजन्तेषु**

पाठन पाठनीय च पाठकः पाठ्यते ततः ।
पाठ्यता पाठ्यमान च प्रपाठ्याथास्ति पाठितम् ॥ ३० ॥
पाठयित्वा तथा पाठयितु पाठिष्यते ततः ।
रूपं पाठिष्यमाण स्यादपाठिष्यत चान्तिमम् ॥ ३१ ॥
ण्यन्ते सन्त्यसवो भाषासस्कृतस्य त्रयोदश ।
अस्-भू-कृ-धातवः सन्ति सर्वोद्दिष्टोपकारकाः ॥ ३२ ॥
[ पाठिष्यते इत्यादौ स्यप्रत्यये परतः 'स्यसिजि'ति (६/४/४२) चिण्वद्भावो द्रष्टव्यः ]

**क्रियावाचकानि**

धातुभ्यः सर्वेभ्यः सकर्मकेभ्यस्तु कर्मवाच्यं स्यात् ।
धातुभ्योऽभीष्टं स्यादकर्मकेभ्यस्तु भाववाच्य च ॥ ३३ ॥
अस्-भूधात्वोः कृधातोश्च कर्तृवाच्यमपीष्यते ।
एतत्त्रयान्यधातुभ्यः कर्तृवाच्यं तु नेष्यते ॥ ३४ ॥
गण-तच्चिह्न-परस्मैपदादिचिन्ता तु कर्तृवाच्यत्वे ।
नात्राश्रयणीयं तत् सौकर्याद् भावकर्मवाच्यत्वे ॥ ३५ ॥
आत्मनेपदमेव स्याद् वाच्यत्वे भावकर्मणोः ।
सर्वेभ्य एव धातुभ्यो यक् च स्यात् सार्वधातुके ॥ ३६ ॥

भविष्यति यदा भावकर्मवाच्ये तदा मतौ ।
प्रत्ययौ धातुतिङ्मध्ये क्वचिद् इष्य क्वचित् स्य च ॥ ३७ ॥
कर्मणि पठिष्यमाणं रूप ज्ञेयं पठिष्यतेसदृशम् ।
कर्मणि च पठ्यमानं रूपं यत् तदिह पठ्यतेसदृशम् ॥ ३८ ॥

**भूतकाल:**

समस्तभूतकालार्थं क्तप्रयोग: करिष्यते ।
पूर्णोऽर्थोऽस्धातुना कार्यः श्रुतमासीन्मया यथा ॥ ३९ ॥
पूर्णोऽर्थोऽस्धातुना कार्यो वर्तमानभविष्यतो: ।
क्रमेण-श्रुतमस्तीति श्रुतं चैव भविष्यति ॥ ४० ॥
स्माव्ययेन सम वर्तमानरूप प्रयुज्यते ।
यदा, तदा भवेद् भूतकालबोध: सुखावहः ॥ ४१ ॥

**क्त-क्त्वा-ल्यप्प्रत्यया:**

धातो: क्तान्ते रूपे ज्ञाते क्त्वाप्रत्ययान्तरूपाणाम् ।
प्रायो ज्ञान सुकर ज्ञेयानि पृथग् ल्यबन्तरूपाणि ॥ ४२ ॥
सोपसर्गोऽस्ति चेद् धातु: क्त्वास्थाने ल्यब् विधीयते ।
पठ्यतेसदृशं रूप प्रपठ्येति पठेर्यथा ॥ ४३ ॥

**लृङ्लकार:**

क्रियायाश्चेदनिष्पत्तिरपठिष्यत कथ्यताम् ।
भविष्यद्रूपसादृश्यं रूपेऽस्मिन् विद्यते सदा ॥ ४४ ॥

**इडागम:**

शक्लृपच्मुच्रिचीत्यादि यदावश्यकमेव तत् ।
स्मर्तव्यमेवेड्बोधाय नान्य: पन्था हि विद्यते ॥ ४५ ॥

**उपसर्गा:**

विशेषेणोपसर्गाणां प्रयोगार्थौ निबोधत ।
प्रहाराहारसंहारविहारादौ च भिन्नताम् ॥ ४६ ॥

**नामधात्वादीनि**

प्रयोगो नामधातूनां तथा च्व्यन्तणिजन्तयो: ।
सर्व: सुखावहोऽस्तीति कार्य आरम्भत: सदा ॥ ४७ ॥

**ल्युडादेश: अन:**

सर्वेभ्यो धातुभ्यो भवत्यनप्रत्यय: स भावेऽर्थे ।
हसनं हिन्द्यां हँसना, पानं=पीना तथाऽशनं=खाना ॥ ४८ ॥

**अनीयः**

सर्वेभ्यो धातुभ्यो विध्याद्यर्थे भवत्यनीयः कृत् ।
सोऽकर्मकात्तु भावे, भवति च कर्मणि सकर्मकाद् धातोः ॥ ४९ ॥
विध्याद्यर्थं प्रयोगः स्यादनीयप्रत्ययस्य चेत् ।
इडागमप्रसङ्गो न, न लिङः क्लिष्टतापि च ॥ ५० ॥
अनीयो भावकर्मार्थः प्रायः क्तोऽपि तथार्थकः ।
गत्यर्थाकर्मकादिभ्यः क्तः कर्तर्यपि विद्यते ॥ ५१ ॥

**ण्वुलादेशः अकः**

ण्वुल्प्रत्ययोऽस्ति विहितो वर्तमानभविष्यतोः ।
तेनैव कार्यं स्याच्छतृशानचोः कर्तृवाच्ययोः ॥ ५२ ॥
सर्वेभ्यो धातुभ्यो भवत्यकप्रत्ययः स कर्त्रर्थः ।
एतेनैवाकेन व्युत्पाद्याः खेलकादयः शब्दाः ॥ ५३ ॥
((३/१/११३) 'ण्वुल्तृचौ' वर्तमाने 'तुमुन्ण्वुलौ क्रियाया क्रियार्थाया'मिति च भविष्यति ण्वुल् (३/३/१०))

**पुरुषाः**

युष्मत्प्रथमास्थाने भवतो-लिङ्गानुसारिरूपाणाम् ।
विहिते सति प्रयोगे मध्यमपुरुषाद् भवेत् सदा मुक्तिः ॥ ५४ ॥
पूज्यो भवांस्तथा तत्रभवानत्रभवांस्तथा ।
कार्याः पूज्यत्वबोधाय प्रयोगाः सर्वसम्मताः ॥ ५५ ॥
स्थानेऽस्मत्प्रथमाया-अयं जनोऽस्मद्द्वयं, बहुत्वे तु ।
स्याच्चेदिमे जना इति मुक्तिः सिद्धोत्तमात् पुरुषात् ॥ ५६ ॥
जनशब्दप्रयोगोऽयम् इष्टः स्त्रीपुंसयोः समः ।
इदमात्रप्रयोगाच्च कार्यं साध्यं नपुंसके ॥ ५७ ॥
अवशिष्ट च पुरुषे प्रथमे वचनद्वयम् ।
तेनैव सर्वदा कार्यं संस्कृते प्रचलिष्यति ॥ ५८ ॥

**वचनानि**

नावश्यकं द्विवचनं द्वयशब्दो योज्यतेऽत्र नाम्नोऽन्ते ।
'वृक्षेऽस्ति फलद्वय'मिति पुरुषे प्रथमे तथैकवचने तत् ॥ ५९ ॥
नाम्नि द्विवचनं नेति तिङन्तेऽपि न तद् भवेत् ।
भवत्यतोऽन्यभाषावत् संस्कृते वचनद्वयम् ॥ ६० ॥

### कृत्प्रत्ययाः

अनानीयाकतुमुक्तक्त्वाल्यबमानप्रत्यया इमे ।
भजन्ते सार्वभौमत्वं कृतिस्विहेत्ववधार्यताम् ॥ ६१ ॥
कृत्तद्धितचर्चेयं विषयो व्युत्पत्तिशास्त्रसम्बद्धः ।
व्याकरणस्य तथार्थज्ञानस्यैषोपकारिकास्ति भृशम् ॥ ६२ ॥
कृदन्तास्तद्धितान्ताश्च शब्दाः कोशादिवाचनात् ।
सार्था ज्ञेयास्तद्धितेषु केचिन्मुख्या मता यथा ॥ ६३ ॥

### तद्धिताः

त्वतलौ-मृदुत्वमृदुते, मदिकौ-धनवांस्तथा भवेद्धनिकः ।
तारकितमितीतच् स्याद्, वत्-विधिवत् पुत्रवच्च यथा ॥ ६४ ॥
सात्-अग्निसात्, तरतमौ स्तः सुखतरसुखतमादिशब्देषु ।
कल्पब्-विद्वत्कल्पो, देशीयश्चाष्टवर्षदेशीयः ॥ ६५ ॥
आदितो मध्यतश्चेति तसिल् सार्वविभक्तिकः ।
ह्रस्वे को-वृक्षको, दघ्नज्-जानुदघ्नं सरिज्जलम् ॥ ६६ ॥
यः स्यादभूततद्भावे च्विः-शुक्लीभवतीति सः ।
तद्धितप्रत्यया मुख्याः केचिदेवात्र दर्शिताः ॥ ६७ ॥
'वा नामधेयस्ये'तीयं वृद्धसज्ञा विकल्प्यते ।
सर्वेभ्यो रूढशब्देभ्यो 'वृद्धाच्छः' सम्मतस्ततः ॥ ६८ ॥
ये घटीयपटीयाद्याः शब्दास्तार्किविदां मताः ।
साध्याश्छप्रत्ययेनैव शेषेऽर्थे विहितोऽस्त्यसौ ॥ ६९ ॥
शेषोऽर्थोऽपत्यादेश्चतुरर्थ्यन्तात् पृथक् स जातादिः ।
तत्रार्थे विहितोऽयं, शब्देऽजाद्यो न याति विकृतिमिह ॥ ७० ॥
प्रत्ययोऽय सार्वभौमस्थितिं याति जने जने ।
अतस्तस्य प्रसारोऽपि न केनापि निवार्यते ॥ ७१ ॥

### शब्दकोशः शब्दरूपावलिश्च

बहवः संस्कृतशब्दाः पुंसि क्लीबे च सन्त्यकारान्ताः ।
ग्राह्यास्त एव पूर्वं तदभावेऽन्ये प्रयोक्तव्याः ॥ ७२ ॥
अकारान्तः सदा शब्दस्तदन्यान्ताद् विशिष्यते ।
विभक्तिरूपसारल्याज् जनकः पित्रपेक्षया ॥ ७३ ॥
आकारान्ता इकारान्ता ईकारान्ताश्च ये स्त्रियाम् ।
बहवः सन्ति ते ग्राह्याः सौकर्यं तैर्भवेदतः ॥ ७४ ॥

दीर्घस्वरान्तशब्दानामभावोऽस्ति नपुंसके ।
ह्रस्वाकारान्तशब्दानामभावोऽस्ति स्त्रियां तथा ॥ ७५ ॥
स्त्रीपुंसयोर्व्यञ्जनान्तानाम्नां रूपेषु तुल्यता ।
सरितो मरुतश्चास्ति साम्यं सर्वविभक्तिषु ॥ ७६ ॥
व्यञ्जनान्तेषु विकृतिर्न स्वरादिविभक्तिषु ।
यथा लिहौ, परं राज्ञ इत्यादौ विकृतिः क्वचित् ॥ ७७ ॥
शब्दा अकारेकारान्तास्तद्भवद्युष्मदस्मदः ।
वेधोधन्यात्मगच्छन्तः कार्या जिह्वाग्रगाः सदा ॥ ७८ ॥
आकारदीर्घेकारान्तशब्दाभ्यासः स्त्रिया हितः ।
जगत्सरिद्भूभृदाद्याः सर्वे कण्ठे स्थिता हिताः ॥ ७९ ॥

**[ इयमत्र नामशब्दरूपावलियोजना ]**

**गजमुखदयानदीतद्भवदस्मद्युष्मादिदमदः कवयः ।**
**मतिपशुतनुपितृनेतृद्वित्रिचतुःपञ्चषट्सरिद्धनिनः ॥ ८० ॥**
**वेधा युवाणिमात्मा स्त्री धीर्माता प्रधीर्वधूर्भूर्गौः ।**
**दधि वारि मधु जगदहः कर्म धनुर्धातृ भावि नाम मनः ॥ ८१ ॥**

त्वामेत्यादीनि रूपाणि विद्यन्ते युष्मदस्मदोः ।
छात्रैस्तेषां प्रयोगो न कार्यः स्खलनशङ्कया ॥ ८२ ॥
एनप्रयोगमुक्त्यर्थं द्वितीयाटौस्सु सर्वदा ।
अदश्शब्दः प्रयोक्तव्यः शब्दयोरिदमेतयोः ॥ ८३ ॥
श्यामोऽयं मम पुत्रोऽस्ति पाठयामि गुरो गृहे ।
अमुना पठितं काव्यं, दर्शनं पाठ्यतेऽधुना ॥ ८४ ॥

## लिङ्गानि

पुल्लिङ्गं स्त्रीलिङ्गं तृतीयलिङ्गं नपुंसकं चेति ।
सिंहः सिंहीत्यादौ लिङ्गं नियतं बहुत्र च स्वैरम् ॥ ८५ ॥
लोकाश्रयं हि लिङ्गं सरला युक्तिर्न तस्य बोधाय ।
संस्कृतभाषायामिह तज्ज्ञानं सर्वतोऽधिकं क्लिष्टम् ॥ ८६ ॥

## सन्धयः

उच्चारणविधिः सान्ध्यर्यः पूर्वपरवर्णयोः ।
विवक्षाधीन एवातः स सर्व इति बुद्ध्यताम् ॥ ८७ ॥
अर्धमात्रात्मकः कालो मध्ये चेद् वर्णयोर्द्वयोः ।
कार्यः सन्धिस्तदाधिक्ये सन्धिर्नेति विकल्पनम् ॥ ८८ ॥

कृत्वैकपदे सन्धिं सर्वैरेव प्रयुज्यतेऽत्र पदम् ।
नित्यः स तत्र, धातूपसर्गयोरपि स नित्य एवास्तु ॥ ८९ ॥
समासविषये सन्धेर्विकल्पस्य प्रकल्पनात् ।
भूवादिसूत्रभाष्येऽपि विकल्पस्यास्ति शङ्कनम् ॥ ९० ॥
पद्ये मात्रादिगणनं सन्धिं ज्ञात्वैव कल्प्यते ।
सन्धिज्ञानमतः कार्यं प्रयोगेऽस्तु विकल्पनम् ॥ ९१ ॥

**समासाः**

अवश्यं सरलाः कार्याः समासा द्विपदात्मकाः ।
सख्यादिषु समासान्तभीतेः पर्याययोजनम् ॥ ९२ ॥
एष पुत्रसखो यातीत्यस्य स्थाने प्रयुज्यताम् ।
याति पुत्रवयस्योऽयमित्याद्यत्र यथामति ॥ ९३ ॥
अन्ते येषां समासानां प्रत्ययस्य विधिर्भवेत् ।
प्रयोगाः परिहर्तव्याश्छात्रैस्तो भाषणे मिथः ॥ ९४ ॥
शब्दा रहितशून्याद्या युक्तयुक्तादयस्तथा ।
सर्वदा संप्रयोक्तव्या गोशून्यो, गोयुतो यथा ॥ ९५ ॥
प्रायः समस्तशब्दानामदन्तत्वविधित्सया ।
प्रवर्तन्ते समासान्ताः प्रत्यया इति दृश्यते ॥ ९६ ॥
स्थलेषु केषुचिद् द्वन्द्वः समाहारो नियम्यते ।
स चेतरेतरद्वन्द्वात् सुलभोऽप्यस्ति भाषणे ॥ ९७ ॥
प्रसिद्धा येऽव्ययीभावास्ते ग्राह्या भाषणे सदा ।
समासे क्लिष्टता यस्मिन् स समासोऽपनीयताम् ॥ ९८ ॥

**अव्ययानि**

प्रारम्भादेवाव्ययशब्दा वाक्ये भृशं प्रयोक्तव्याः ।
स्थलकालादिकभेदान् ज्ञात्वा सम्यक् प्रयोग आश्रेयः ॥ ९९

**विशेषणानि, क्रियाविशेषणानि च**

नैव वाक्ये प्रयोक्तव्यं केवलं शोभनादिकम् ।
तत्त्वतोऽर्थं विदित्वैव प्रयोक्तव्यं विशेषणम् ॥ १०० ॥
क्रियाविशेषणानां च प्रयोगो वाक्यभूषकः ।
छात्रैस्तेषां प्रयोगोऽपि कार्यो वाक्ये शनैः शनैः ॥ १०१ ॥

**विभक्त्यर्थाः**

कारकनियमान् स्मृत्वा व्यवहारे संस्कृतं प्रयोक्तव्यम् ।
संख्याव्ययधात्वादेरुपयोगे सावधानता श्रेया ॥ १०२ ॥
कारके कर्तृकर्मादिरविवक्षा भवेद् यदा ।
सम्बन्धेऽस्ति तदा षष्ठी, षष्ठी सर्वार्थसाधिका ॥ १०३ ॥
स्यात् पञ्चम्याः स्थाने तस्प्रत्यय, इति न पञ्चमी कार्या ।
नौतो नौद्वयतो बहुनौत इति च सर्वदा प्रयोक्तव्यम् ॥ १०४ ॥
स्थाने क्वचित् तृतीयाया द्वारा वा साधनेन वा ।
प्रयोक्तव्यं, यथा-दण्डद्वारा सर्पोऽत्र हन्यताम् ॥ १०५ ॥
नाम्नोऽन्तेऽर्थं प्रयोक्तव्यं चतुर्थी विहिता यदि ।
पानायेत्यस्य यत्कार्यं तत् पानार्थं करिष्यति ॥ १०६ ॥
उपर्याद्याः प्रयुज्यन्ता षष्ठ्यन्तेन समं क्वचित् ।
स्याद् भूमाविति चेद् भूमेरुपरीत्यादि भाष्यताम् ॥ १०७ ॥
सच्छात्रैः स्मर्तव्या उपपदकारकविभक्तयो नित्यम् ।
अभ्यास एव तत्र प्रभवेत् संलापकुशलतासिद्ध्यै ॥ १०८ ॥

**संख्याः**

गणनार्था यथा संख्या पूरणार्थापि सा तथा ।
स्मर्तव्ये ते उभे संख्ये स्खलनं ध्रुवमन्यथा ॥ १०९ ॥
संस्मर्येतामुभे लघ्वी संख्या दीर्घा तथा भृशम् ।
अनभ्यासात्तयोर्मौन सभायामुपहासकृत् ॥ ११० ॥
योऽर्थ एकशतस्यास्ति सोऽत्रास्त्येकाधिक शतम् ।
तथार्थो द्विशतस्यास्ति यः सोऽस्ति द्व्यधिकं शतम् ॥ १११ ॥
बहु वाच्यं यत् संख्याविषये तत् सर्वमुच्यतेऽन्यत्र ।
सर्वत्र सावधानैः संख्याविषये सदैव भवितव्यम् ॥ ११२ ॥

**सारः**

सङ्कीर्णं यन्निषेधाद्यैः कार्यं तद् दूरतस्त्यजेत् ।
सर्वदा तज्जनैर्ग्राह्यं सरल यत् प्रतीयते ॥ ११३ ॥

**उपसंहारः**

सरलक्लिष्टौ मार्गौ स्त उभावपि पाणिनीयशास्त्रेऽतः ।
भाषां प्रविश्य सरलैर्मार्गैः क्लिष्टस्ततोऽधिगन्तव्यः ॥ ११४ ॥
पालिर्वा प्राकृतं वा स्यात् पाणिनीयस्य बाधने ।
तन्माभूदिति शास्त्रस्य प्रामाण्यं नावमन्यताम् ॥ ११५ ॥

## व्यवहारसंस्कृतसारः

( 1 ) नामाद्यन्ते द्वयशब्दसंयोजनात् सुबन्ततिङन्तयोर्द्विवचनान्मुक्तिः ।

( 2 ) युष्मत्प्रथमास्थाने भवच्छब्दप्रथमाप्रयोगेण मध्यमपुरुषान्मुक्तिः ।

( 3 ) अस्मच्छब्दप्रथमास्थाने अयं जन इत्यादिप्रयोगेण उत्तमपुरुषान्मुक्तिः ।

( 4 ) अन्ततोगत्वा केवलं प्रथमपुरुषैकवचनबहुवचने एव प्रयोगार्हे ।

( 5 ) अस्-भूधात्वोः कर्तृभाववाच्ये, कृधातोश्च कर्तृकर्मवाच्ये प्रयोगः कार्यः ।

( 6 ) अन्येषु धातुषु सकर्मकेभ्यः कर्मवाच्यमेव तथा अकर्मकेभ्यः भाववाच्यमेव ।

( 7 ) एतत्स्वीकारे भ्वाद्यादिगणज्ञानचिन्ता न ।

( 8 ) गणविकरणचिन्ता न ।

( 9 ) आत्मनेपदपरस्मैपदविचारचिन्ता च न ।

( 10 ) शतृप्रत्ययस्थाने कर्तरि वर्तमानभविष्यतोः कार्यम् अकप्रत्ययः ( ण्वुल् ) करिष्यति ।

( 11 ) कर्मणि पठ्यमानपठिष्यमाणरूपयोः व्यवस्था स्वीकृता एव ।

( 12 ) भूतकाले क्तप्रत्ययस्यैव प्रयोगः । पूर्णभूतादिकं सर्वमस्धातुसाहाय्येन सिद्धम् ।

( 13 ) लिङर्थे केवलमनीयप्रत्ययः भावकर्मार्थकः स्वीकृतः । तस्य विविधा अर्थाश्च स्वीकृताः ।

( 14 ) लोट्लकारः स्वीकृतः अस्ति ।

( 15 ) क्रियाया अनिष्पत्तौ अपठिष्यतेत्यादि लृङ्लकाररूपं स्वीकृतम् ।

( 16 ) भावे केवलमनप्रत्ययेन ( ल्युट्प्रत्ययेन ) हसनपठनादिशब्दैः सर्वं कार्यं साधितम् ।

( 17 ) कृत्प्रत्ययेषु अन, अक, तुम्, क्त, क्त्वा, ल्यप्, अनीयकर्मवाच्यमानप्रत्ययानां प्राधान्यम् ।

( 18 ) सोपसर्गाणां धातूनां, नाम-धातूनां, णिजन्तानां च्व्यन्तानां च प्रारम्भत एव अभ्यासार्थं प्रवर्तनम् आवश्यकम् ।

( 19 ) सन्धिः केवलमेकपदे, धातूपसर्गयोश्चापरिहार्यः, समासे वाक्ये च वक्तुरिच्छा ।

( 20 ) विशेषणानां, क्रियाविशेषणानाम्, अव्ययशब्दानां, संख्याशब्दानां च विशेषेणाभ्यासः । दीर्घसंख्या-कथने च सौविध्यप्रदर्शनम् ।

( 21 ) केवलं द्विपदात्मका मातृभाषायां रूढाः सरलाश्च समासा एव ग्राह्याः । द्वन्द्वे समाहारद्वन्द्वप्राधान्यम् । येषु समासान्ता विधीयन्ते, तेभ्यो दूरे एव स्थातव्यम् ।

( 22 ) विभक्त्यर्थानां सम्यग् ज्ञानम् अपरिहार्यम् ।

( 23 ) उपपदविभक्तीनां च अविवर्जनीयता विद्यते । द्वारापदसंयोजनेन, साधनेन पदसंयोजनेन वा तृतीयायाः स्थाने क्वचित् च प्रयोग इष्टस्तदन्तः । अर्थपदस्य नामाद्यन्ते संयोजनेन क्वचिच्चतुर्थ्या मुक्तिः । तस्प्रत्ययस्वीकारेण पञ्चम्या मुक्तिः । षष्ठ्यन्तेन सह, उपरिमध्यादिशब्दयोजनेन क्वचित् सप्तम्याश्च मुक्तिः । सर्वासु विभक्तिषु विवक्षानुसारेण षष्ठीविभक्त्याः प्राधान्यम् ।

( 24 ) तद्धिते ज्ञाताः प्रसिद्धा एव प्रयोगाः ग्राह्याः । अन्यत्र वाक्यप्रयोगेण कार्यं साधनीयम् । 'वा नामधेयस्येति' वार्तिकेन सर्वरूढशब्देभ्यः अपत्यादिचतुरर्थ्यन्तेभ्यः अन्येषु जाताद्यर्थेषु वृद्धसंज्ञायां, छप्रत्ययस्यैव भूयिष्ठं प्रयोगकरणस्य उपदेशः । तेन घटीयपटीयशब्दाः सुखेन व्युत्पादनीयाः ।

( 25 ) कोषादिग्रन्थेभ्यः अकारान्तादिसरलशब्दग्रहणार्थम् उपदेशः ।

( 26 ) लिङ्गविषयिणीमसहायतां दूरीकर्तुं निम्नलिखितः प्रस्तावः ।

( क ) सर्वे चेतनपदार्थवाचकाः शब्दाः स्फुटपुंस्त्वस्त्रीत्वचिह्नानुसारेण पुंल्लिङ्गे स्त्रीलिङ्गे च प्रयोक्तव्याः, यथा नरः नारी ।

( ख ) चेतनेष्वपि पुंस्त्वस्त्रीत्वचिह्नानिर्णये ते सर्वे शब्दा नपुंसकलिङ्गा भवेयुः, यथा क्षुद्रजन्त्वादयः ।

( ग ) सर्वे अचेतनपदार्थवाचकाः शब्दाश्च नपुंसकलिङ्गे प्रयोक्तव्याः ।

यावत्पर्यन्तं नैष प्रस्तावः भाषाधिकारिपुरुषैः समर्थ्यते तावत्पर्यन्तं यथास्थितमेव श्रेयः ।

लिङ्गस्य लोकाश्रयत्वात् लिङ्गविषये परिवर्तनादिकं कर्तुं संस्कृतभाषाधिकारिण एव प्रभविष्यन्ति ।

प्राचीनपरम्परया

लिखितं ग्रन्थेषु, भाषितं वान्यैः ।

दीयन्त एव वेत्तुं

सङ्केता इह नवीनपद्धत्याम् ॥



# संस्कृतवाङ्मयं विश्वसर्वस्वम्

**श्रीसिद्धिनाथगौतमः**

**"संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः"** इतीत्थं समादृत्य सुरभारती सर्वत्र सर्वदा सर्वथा देदीप्यमाना सती विश्वशान्तिं सकलमानवकल्याणं च सम्पादयित्री विराजतेतरां सुतरामिति तु विजानन्त्येव सर्वेऽपि विवेकिनः सन्तो महान्तः।

**ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।**

**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्॥**

इत्येवमीश्वरीयसत्तासाम्राज्यं सर्वत्र स्वीकृत्य सर्वत्र कार्येषु निष्काम-कर्मयोगं निर्दिशत् संस्कृतवाङ्मय शाश्वतं सनातनं विष्वक्प्रसृमरगौरवं विश्वजनीनं चेत्यत्र नास्ति कोऽपि द्वापरावमरः।

"यत्र विश्व भवत्येकनीडम्", "वसुधैव कुटुम्बकम्" इत्याद्युद्घोषतो विश्वमानवान् प्रति एक-परिवारत्वेन एकाश्रयत्वेन च व्यवहरत् सस्कृत चिरनूतनं देशकालाद्यनवच्छिन्न सर्वोपकारकं सर्वोपादे-यञ्च वरीवर्तीत्यत्र प्रमाणं सकलमेव विश्वम्। यतः सर्वत्र देशेषु स्वकीयराष्ट्रप्रकृत्यनुरूप स्व-स्वप्रकारेण सस्कृतं शिक्षणानुसन्धानादिषु कृतव्यवस्थमेव परिदृश्यते। **"आत्मवत् सर्वभूतेषु", "भद्रकृद् भद्रमश्नुते"** इत्येतादृशीमुदात्तामुद्घोषणां प्रसार्य यादृशी विशाला ऽनुकरणीया च भावना सस्कृतेन सस्थापिता, ततः सर्वेऽपि प्राणिनः सातिशयं प्रभाविता विहितोपकाराश्च विद्यन्ते।

**"यावद् भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम्।**

**अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति"॥**

**"सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्"।**

**"सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः"।**

इत्याद्युद्गारतः संस्कृतेनैव सुचिरकालादद्यावधि समतायाः स्वातन्त्र्यस्य विश्वबन्धुत्वस्य च महनीया मानवीयमर्यादाः सजीवं संस्थापिताः सर्वत्र जगति।

श्रुतिस्मृतिपुराणसाहित्यानां दर्शनशास्त्राणां रामायणमहाभारतादिरचनानां च उदात्ता उदाराश्च ये सन्ति आदर्शास्तेषामुन्मेषतोऽनुप्राणिताः सर्वेऽपि आर्यसस्कृत्यनुयायिनः सगर्वगौरवं प्रशंसनीयत्वेन प्रतिष्ठिताः सन्ति।

**"सा संस्कृतिः प्रथमा विश्ववारा", "संस्कृतं संस्कृतेर्मूलम्"** इतीत्थं विश्वैकान्तहितायाः प्रथमसंस्कृते-र्मूलरूपेण प्रतिष्ठितस्य संस्कृतवाङ्मयस्य देशकालाद्यनवच्छिन्नतया समग्रवर्ण-जाति-वर्ग-व्यवसायेषु

परस्परं सुमधुरतापूर्णैकतायाः सम्पादकं समेषां श्रद्धेयं समादरणीयञ्चासाधारणं वैशिष्ट्यं सर्वत्र जागर्ति नितरां समीचीनया रीत्या ।

सकलानामप्यार्यभाषाणां स्रोतो विश्वभाषोपकारकमेव संस्कृतमजरममृतं च वाङ्मयम् । पुनश्च संस्कृतभाषा केवलं भाषैव न, विविधज्ञानविज्ञानानन्तनिधिरप्यत्र वर्तत एव । केवलमेतावदेव न, संस्कृते विषयप्रतिपादनशैल्यपि आलङ्कारिकतया, दार्शनिकतया, अनुवादादितो यथायथ स्वकीय-स्वारस्यानुत्पादकत्वेन च पृथगेव वैशिष्ट्यशालिनीत्यतोऽपि सनातनी अजराऽमरा च ।

संस्कृतस्यैतादृशं चतुरस्रप्रसृतमजरममृतञ्च महत्त्वं निभाल्यैव विश्वे स्व-स्वराष्ट्रप्रकृत्यनुकूलतया शिक्षणानुसन्धानादिव्यवस्था विहिता वर्तते । अस्माकं नेपालाधिराज्ये विशेषतो धर्म-दर्शन-भाषा-भूषाचारविचाराश्च संस्कृताश्रितान् विमृश्य संस्कृतशिक्षा राष्ट्रियशैक्षिकधारायां समन्विता कृताऽस्ति । एतस्मिन्नेव परिप्रेक्ष्ये संस्कृतविश्वविद्यालयोऽपि संस्थापितोऽस्ति । विश्वविद्यालयोऽयं शैक्षिक-प्राज्ञिक-विभिन्नकार्यक्रमसञ्चालने तत्परत्वेन संलग्नोऽस्ति । सस्कृतं जनोपयोगिरूपेण सर्वजनसुलभं कृत्वा अध्यात्मभाव-चरित्रनिर्माण-नैतिक-मर्यादासंस्थापने प्रयोगानुभवरूपविज्ञानात्मकत्वे च विश्वविद्यालयत आदर्शभूताः कार्यक्रमाः सञ्चालनीयाः सन्ति ।

नेपालाधिराज्ये संस्कृतशिक्षापाठ्यक्रमे द्विविधो दृष्टिकोणः स्वीकृतो वर्तते । शास्त्रिकक्षापर्यन्त सस्कृतविषयास्तु स्वतो भवन्त्येव, आङ्ग्लभाषा-राजशास्त्रार्थशास्त्राद्याधुनिकविषयाणामपि तत्र समावेशः कृतोऽस्ति ।

यतो राष्ट्रियविकाससन्दर्भे प्राशासनिकादिकार्येष्वपि शास्त्रिपरीक्षोत्तीर्णाश्छात्राः, बी ए परीक्षोत्तीर्ण-च्छात्रसमकक्षत्वेन निर्बाधं प्राप्तावसरो भवेयुरिति । आचार्यकक्षायां विद्यावारिधौ च तत्तद्विषयाणां विशिष्टीकरणतः सम्बद्धविषयविशेषज्ञोत्पादनलक्ष्य निर्धार्य पाठ्यक्रमव्यवस्था कृता वर्तते । आचार्यस्य एम. ए समकक्षत्व विद्यावारिधेः पी-एच. डी. समकक्षत्वं स्वीकृतमस्ति । इत्थमस्माकं नेपालदेशे संस्कृतपरोक्षोत्तीर्णाश्छात्रा अन्यपरीक्षोत्तीर्णच्छात्रैः सह प्रतिस्पर्धां कुर्वन्तः सफलतां च गताः सन्ति ।

धर्म-दर्शन-कला-साहित्य-भाषाविज्ञानायुर्वेद-ज्यौतिष-राजशास्त्रार्थशास्त्र-कृषि-वाणिज्य-पशुविज्ञान-वनस्पतिशास्त्रादिनैकविधज्ञानविज्ञानानन्तनिधेः संस्कृतवाङ्मयस्योपादेयत्व सर्वत्र देशेषु स्वेन स्वेन रूपेण सविशेषं स्वीकृतमेव लभ्यते । भारतवर्षस्य तु समग्रमेव जीवनदर्शनं संस्कृतवाङ्मयादेवानुप्राणितं विद्यते ।

**'सरस्वती श्रुतिमहती महीयताम्'** इति यदस्ति महाकविकालिदासोट्टङ्कितम्, ततोऽपि ज्ञायते यत्– अतिप्राचीनकालतः कालिदासपर्यन्तं तत इदानी यावदपि अविच्छिन्नप्रवाहरूपेण सस्कृतं प्रचलत्स-मागतमस्तीति । महाकवेरस्याभिज्ञानशाकुन्तलविषये पाश्चात्त्यविदुषो गेटेमहाभागस्याभिव्यक्तिरस्मिन् प्रसङ्गे संस्मरणीयाऽस्ति । यथा–

**वासन्तं कुसुमं फलं च युगपद् ग्रीष्मस्य सर्वं च यद्**
**यच्चान्यन्मनसो रसायनमहो सन्तर्पणं मोहनम् ।**
**एकीभूतमभूतपूर्वमथवा स्वर्लोकभूर्लोकयो-**
**रैश्वर्यं यदि वाञ्छसि प्रियसखे शाकुन्तलं सेव्यताम् ॥**

संस्कृतवाङ्मयस्यैका कृतिरपीत्थ प्रशंसिता वर्तते चेत्, समग्र वाङ्मयं तु कीदृश महत्त्वशालि स्यादिति कथनमशक्यमेव ।

प्राचीनेतिहाससंस्कृतिशिलालेखानां दुर्लभानाममूल्यानां हस्तलिखितग्रन्थानां च नेपालो भारत च भाण्डागाररूप एव । एतेषा सम्पादनप्रकाशनानुसन्धानानां बृहद्व्यवस्था विधातव्याऽस्ति । विश्व-सम्पदासूच्या समाविष्टानामनेकविधमठ-मन्दिर-मूर्तिसमेतानां कलात्मकविविधसम्पत्तीनां महनीय-महिमान्वितानां तीर्थस्थलानां च विशालातुलनिधिरूपं भारतवर्ष संस्कृतवाङ्मयस्य नैकविधदृष्ट्या अध्ययनानुसन्धानादिविषयीभूतमस्ति । एतेषा संरक्षणाध्ययनादिसौविध्यार्थमणुच्छायिकतदध्ययन-यन्त्रादीनाम् (माइक्रोफिल्म-माइक्रोफिल्मरीडराख्यादीनाम्) आधुनिकसामग्रीणामपि व्यवस्था साधु विधेयैव प्रतिभाति ।

सयुगबोधं नवीनविचारैः समं प्रतिस्पर्धायां क्षमताशालिन्या आधुनिकतोपलब्ध्या उपायान्तरैश्च संस्कृते आकर्षण समानेयम् । अन्तारार्ष्ट्रियक्षेत्रे स्व-स्वविचाराणां समुपस्थापकेषु संस्कृतमप्येकमस्ति सक्षमम् । कम्प्यूटरविज्ञाने संस्कृतसदृशमुपादेयं नान्यदस्तीत्यपीदानी तद्विशेषज्ञाः कथयन्ति । अतः संस्कृतशिक्षणम्, तन्मूलकमनुसन्धानादिक च सर्वत्र देशेषु योजनाबद्धरूपेण निष्ठापूर्वकं सञ्चालनीये सुतरामेव ।

**यावद् भारतवर्षं स्याद् यावद् विन्ध्यहिमाचलौ ।**
**यावद् गङ्गा च गोदा च तावदेव हि संस्कृतम् ॥**

पाश्चात्त्यैरपीत्त्थ कृतप्रशसस्य संस्कृतवाङ्मयस्य ज्ञान-विज्ञानक्षेत्रे यदस्ति योगदान तत्सर्वदा सर्वथा मानवसर्वस्वरूपेणैव स्थित सम्यगनुभूयते ।

**"अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः" ।**

महाकविकालिदासेनेत्त्थ वर्णितस्य विश्वस्मिन् सर्वोन्नतस्य शैलाधिराजस्य हिमालयस्य स्वच्छेन समुन्नतेन च महिम्ना मण्डितोऽस्माकं नेपालदेशः । भारतवर्षमपि तथैव गौरवान्वित सत् "**जननी जन्मभूमिश्च स्वर्गादपि गरीयसी**" इति राष्ट्रियादर्शं स्मार स्मार "सत्य शिवं सुन्दरम्" इति जीवनदर्शन समाश्रयति ।

उपर्युक्तवस्तुतथ्यानुसारमपरिमितोपादेयतासम्पन्नस्य विश्वजनीनस्य संस्कृतवाङ्मयस्य चतुरस्र-विकासार्थं सर्वैरेव देशैः सश्रद्ध प्रयासः कर्त्तव्यः । सन्दर्भेऽस्मिन् सञ्चालनीयेषु कार्यक्रमेषु निम्नाङ्कित-कार्यक्रमा विशेषतः परिगणनार्हा भवन्ति । यथा–

1. संस्कृतशिक्षणसंस्थानां संख्यावर्द्धनम्, आश्रमपाठशालाव्यवस्था च ।
2. संस्कृतशिक्षाया नारीवर्गस्याल्पसंख्याकस्य च वर्गस्य प्रोत्साहनम् ।
3. अपेक्षितकालपर्यन्त छात्रवृत्ति-छात्रावासादिसौविध्यस्य प्रदान वर्द्धन च ।
4. स्थाने-स्थाने कर्मकाण्डप्रशिक्षणम्, रामायण-महाभारतकथापुराणवाचनव्यवस्था, धर्मसभादि-प्रबन्धश्च ।
5. संस्कृतविशिष्टजनशक्तीना कृते सम्मानपूर्णकार्यक्षेत्रस्य निर्धारणम् ।
6. सरलपुस्तकरचना, सरलसंस्कृतशिक्षणशिबिरादिसञ्चालनञ्च ।

7. सर्वत्र शिक्षालयेषु संस्कृतस्यानिवार्यत्वम्, संस्कृतसम्बद्धसम्पत्तीनां संरक्षण सम्यगुपयोगश्च ।
8. ग्रामे ग्रामे स्थितानां संस्कृतपण्डितानां संस्कृताधारशिक्षणव्यवस्थायां प्रयोग. ।
9. व्यास-वाल्मीकि-कालिदासादीनां जयन्तीसमारोहव्यवस्था, विश्वव्यापिरूपेण मंस्कृतदिवससमारोह-सञ्चालनञ्च ।
10. संस्कृतविदुषां कृते राष्ट्रियपुरस्कारव्यवस्था, अन्ताराष्ट्रियबृहत्पुरस्कारप्रवन्धश्च ।
11. दूरध्वनिचित्रप्रसारकयन्त्रेभ्यः (रेडियो-टेलीविजन) चित्रपट्टकादिभ्यश्च संस्कृतमहत्त्वप्रदर्शन-पूर्वकं प्रचारप्रसारकार्यम् ।
12. योगाश्रमज्यौतिषवेधशाला, शुष्केष्टि-यज्ञशालादिप्रायोगिकव्यवस्था ।
13 ज्यौतिषायुर्वेदसदृशे प्रयोगशास्त्रे पौरस्त्यपाश्चात्त्याध्ययनयोस्तुलनात्मकमध्ययनम् ।
14. सर्वाङ्गीणाना विशिष्टाना संस्कृतपुस्तकालयाना व्यवस्था ।
15 सस्कृतमयवातावरणयुक्ताया एकस्याः सस्कृतराजधानी-महानगर्या उद्घोषणम् ।
16. एकस्य बृहतः सस्कृतपरिचयग्रन्थस्य प्रकाशनम् ।
17. परस्परं राष्ट्रेषु संस्कृतक्रियाकलापाना सस्कृतजनशक्तीना च अन्योन्य विनिमयव्यवस्था ।

[illegible]गणनार्हा एते कार्यक्रमास्तु सन्त्येव । पुनरप्यधिकं विशेषतो निम्नोट्टङ्किता कार्यक्रमाः प्रस्तावरूपेण प्रस्तूयन्ते—

1 विश्वसस्कृतेरेव मूलस्रोतोभूत सस्कृतम्, तन्निष्ठाश्च विश्वकल्याणकारिणीः सार्वभौमचिरन्तनार्ष-भावनाः सर्वतः प्रसारयितु समुद्बोधयितु च विश्वस्मिन्नेका विश्वसस्कृतप्रसारिणी समितिः सङ्घटनीया । तस्याः शाखाप्रशाखाश्च प्रत्येक राष्ट्रे समुद्घाटिताः स्युः ।

2. सर्वासामपि विश्वभाषाणामुपजीव्यत्वेन प्रतिष्ठिताया विश्वशान्तिविश्वबन्धुत्वभावनोद्बोधपराया ज्ञानविज्ञानानन्तनिधिनिलयायाः सस्कृतभाषायाः सर्वत्र सरक्षण-संवर्धन-प्रचार-प्रसारादिषु सयुक्तराष्ट्र-सघेण तदन्तर्गतया शिक्षा-विज्ञान-सस्कृतिसंघटनाख्यया (यूनेस्को) मस्थया विश्वसस्कृताक्षयकोष-संस्थापनादिनैकविधकार्यसम्पादनपुरःसरं विशिष्टः प्रयासः कर्त्तव्यः ।

3 विश्वसस्कृतेरेव स्रोतोरूपेण प्रसृताना सस्कृतभाषानिबद्धाना प्राच्यग्रन्थाभिलेखानां पाण्डु-लिपीनाञ्च विश्लेषणात्मकसूचीपत्रादिनिर्माणपुरःसर सम्पादनप्रकाशने विधातव्ये ।

4. संस्कृतविकाससम्बन्धिनो महतः कार्यजातस्य सफलतायै आधुनिकसकलव्यवहारसम्पादनाय च बृहत्संस्कृतशब्दकोषनिर्माणेऽन्ताराष्ट्रियसस्कृतविदुषामेकं कार्यदल यूनेस्कोसदृशविश्वसंस्थयैव प्रवर्तनीयम् ।

5. संस्कृतवाङ्मयनिबद्धानां महत्त्वपूर्णविषयवस्तूनां सव्याख्यं भाषान्तरणव्यवस्था. भाषान्तरस्थाना जीवनोपयोगिविषयाणां संस्कृतभाषायामनुवादादिकार्यम्, प्राचीनग्रन्थाधारतो जलवायुविज्ञान-सम्बन्ध्युद्घोषणम्, प्राचीनग्रन्थस्थाना वनस्पति-जीव-रसायनशास्त्राणामन्वेषणम्, पौराणिकप्रतीकाणा सोपपत्तिव्याख्यानमित्यादिकं बृहत्कार्यजातं सम्पादनीयं विद्यते । उपर्युक्ताना विविधानां विद्याविधाना

भाषान्तरण-प्रकाशनादि-निखिलकार्यसम्पादनार्थं सर्वत्र देशेषु संस्कृतप्रज्ञाप्रतिष्ठानानि (एकेडेमिज) संस्थापनीयानि । यत एतद्विधविविधकार्यकरणे सौविध्य भवेत् ।

महतीनां प्रतिभानां साधकानां तत्त्वद्रष्टॄणां चावदानाद्विकसितं वेदमूलमनन्तज्ञानविज्ञानसाधनं विश्वोपकारकं विश्वमानवसर्वस्वं संस्कृतवाङ्मयम् । एतादृशस्य संस्कृतवाङ्मयस्य सर्वतोमुखिविकासार्थं बद्धपरिकराः सन्तो वयं विशिष्टाभियानरूपेणैव विविधान् क्रियाकलापान् उदाहरणीयतया सञ्चाल्य विषयेऽस्मिन् विद्यासमक्षं नेतृत्वप्रदानसमर्था मार्गदर्शका भवेम । यतो मनुमहाराजस्य–

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥**

इत्येतदुद्घोषणमिदानीमपि मूर्तरूपेण सार्थकतया समन्वित सत् समुज्जृम्भताम् । अस्तु शम् ।

**"असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्मा अमृतं गमय, जयतु संसारे संस्कृतम्"** ।



# अष्टाध्यायीस्थानां कारकसूत्राणां क्रमे विमर्शः

डॉ. के. रा. जोशी

संस्कृतभाषाया वैदिकं लौकिकं चेति रूपद्वयमपि व्याकुर्वतो भगवतः पाणिनेः अपूर्वं बुद्धिकौशलं जगति तिष्ठति कुतूहलस्य संमानस्य च विषयः । पाणिनिना रचिताम् अष्टाध्यायीं सार्धद्विसहस्र-वर्णजातम् अतीतं, वैयाकरणा अधीयते । अष्टाध्याय्यां नैके विषयाः तथा खलु गूढया पद्धत्या विविधेषु स्थलेषु परामृष्टा यत् तदीयं वस्तुस्वरूपं बोद्धुमपारयन्तः कतिपये विद्वांसः अष्टाध्याय्याः स्वरूपम् अनैसर्गिकं, कृत्रिमं, संभ्रमजनकं चेति अभिप्रयन्ति। पाणिनिना कृतः कारकविचारः अत्र निदर्शनं भवति । यतो हि कारकविचारः आदौ प्रथमाध्यायस्य चतुर्थे पादे 'कारके' (1.4.23) इति सूत्रतः प्रवर्तते । तत्र अपादानं (1.4.24), सम्प्रदानं (1.4.32), करणं (1.4.42), अधिकरणम् (1.4.45), कर्म (1.4.49), कर्तेति (1.4.54) क्रमो वर्तते । अनन्तर कारकविशेषस्य प्रतिपादनाय का विभक्तिः प्रयोक्तव्येति विवृण्वन् भगवान् पाणिनिः द्वितीयाध्याये तृतीयपादस्य आरम्भे 'अनभिहिते' (2.3.1) इति सूत्रं ग्रथ्नाति । तदनन्तरं च क्रमः तिष्ठति द्वितीया (2.3.2 कर्म), चतुर्थी (2.3.13 संप्रदानम्), तृतीया (2.3.18 करणम्), पञ्चमी (2.3.24 अपादानम्), सप्तमी (2.3.36 अधिकरणम्), प्रथमा (2.3.46 कर्ता), षष्ठी (2.3.50 संबन्धद्योतिका) इति । इद विभक्तिप्रकरणं 2.3.70 मितेन सूत्रेण अवसान गच्छति । पर लोके कारकक्रमः –

**कर्ता कर्म च करणं संप्रदानं तथैव च ।**

**अपादानाधिकरणम् इत्याहुः कारकाणि षट् ॥ इति प्रसिद्धः ।**

कारकसंज्ञा खलु पाणिनिकालतः पूर्वं लोके प्रसिद्धा । अपि च सा पाणिनिना अकृतनिर्वचनैव अष्टाध्याय्यां गृहीता । परम् अपादानादिसंज्ञाः पूर्वं प्रसिद्धा अपि कम् अर्थविशेषं स्वव्याकरणे प्रकाशयन्तीति पाणिनिना स्वसूत्रैः प्रकटीकृतम् । तत्र कारकाणां क्रमः तेषा षट्त्वं चेति प्रायः सर्ववैयाकरणसंमतम् । कारकबहिर्भूता अपि संबन्धप्रतिपादने प्रयुज्यमाना षष्ठी विभक्तिक्रमे पूर्वत एव लब्धस्थाना । एवंगते प्रश्नः समुद्भवति कुतः खलु भगवान् पाणिनिः कारकाणा चिरप्रसिद्ध क्रमं परित्यज्य कारकसंज्ञाप्रकरणे अपादानम्ज्ञात आरभ्य कर्तृसंज्ञया समाप्तिं करोति, विभक्तिप्रयोगविचारे तु आदौ कर्मप्रतिपादिकां द्वितीया निरूप्य कारकबहिर्भूतया षष्ठ्या समाप्तिं विदधाति । अपीयं मुनेः स्वतन्त्रेच्छता अथवा भवति तत्र किमपि प्रयोजनम् ? म म काशीनाथशास्त्रिणा अभ्यकरोपनाम्ना 'अत्र क्रियायाः अतिदूरतः संबद्धं कारकम् इति प्रथमम् अपादानकारकं विचारितं, क्रियाया नेदिष्ठं च कारकं कर्तृरूपम् अन्तो विचारितम् । कारकप्रतिपादिकानां विभक्तीना क्रमशो निरूपणे प्रस्तुते तु

कारकाणां क्रियादृष्ट्या महत्त्वं समालोच्य प्रवर्तमानः प्रथमाद्वितीयेति प्रसिद्धः क्रम एवाश्रित इति म. म. काशीनाथशास्त्रिमहोदयस्य मतम् । अन्येन केनापि नवीनेन अधीतिना यज्ञक्रियाया विवरणं कुर्वता पाणिनिना कृतं प्रतिपादनभेदं समर्थयितुं प्रयत्नः कृतः । उभयोर्मध्ये पाणिनिना शब्दानुशासनं रचितमिति म. म. काशीनाथशास्त्रिणा कृतं विवरणं तदनुकूलमिति विचारसहं भासते । परं न तद् यथायथं समाधानं जनयति । यतो हि आदौ पाणिनिना किमर्थं दूरस्थस्यैव कारकस्य विचारः कृतः कुतश्च विभक्तिप्रयोगविचारे स परित्यक्तः । कथं वा उत्तरवर्ती प्रथमाद्यनुसारी क्रम एव तस्य तावदभिप्रेत इत्युच्यते इति नैव स्पष्टं भवति । तर्हि किमत्र समाधानम् ? तत्रेद प्रस्तुमः--व्याकरणेन वाक्यार्थस्य बोधस्य स्वरूप विशदीक्रियते । किं नाम वाक्यम् ? 'कारकान्विता क्रियेति' अमरसिंहस्य नामलिङ्गानुशासनकर्तुः उत्तरं प्रसिद्धम् । सर्वस्यापि जगद्व्यवहारस्यैव विवरणं पदघटितेन वाक्येन भवति । सर्वोऽपि जगद्व्यवहारः क्रियामयः । जगत उत्पत्तिरपि क्रियाविशेष एव । उत्पत्तिः नाम आद्यक्षणसंबन्धः । या काचित् क्रिया भवतु सा सर्वदा अवान्तर-क्रिया-समूहरूपा । यथा पचति प्रतिपाद्या पाकक्रिया । पाकक्रियायां पाचकः प्रथमं चुल्ल्यां पात्रस्य अधिश्रयणं करोति । पात्रे जलप्रक्षेप तण्डुलप्रक्षेपं च करोति, अग्नि प्रज्वालयति, अग्निसंयोगेन तदनु तण्डुलेषु विक्लित्तिः भवति, अनन्तार च पात्रं चुल्लीतः अवतार्यते । एवम् अधिश्रयणतः अवतारणपर्यन्तं यः क्रमवर्ती क्रियाणा समूहः स खलु पाकक्रियायाम् एव अन्तर्भूतः । वैयाकरणभूषणसारे श्रीकौण्डभट्टः प्राह–'व्यापारस्तु भावनाभिधा साध्यत्वेनाभिधीयमाना क्रिया' । तत्र च वाक्यपदीयम् उदाहरन् प्राह–

**'यावत् साध्यम् असिद्धं वा साध्यत्वेनाभिधीयते ।**
**आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥**
**गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।**
**बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥'**

व्यापारः, भावना, क्रिया इति सर्वे शब्दाः पर्यायरूपा इति नार्थान्तरम् । एतादृश्याः क्रियायाः साधकम् उपकारकम् वेति कारकशब्दस्यार्थः सूत्रकारममत इति प्रतिभाति । यतो हि करोतीति कारक इति भवति कारकपदव्युत्पत्तिः । करोति क्रिया निर्वर्तयतीति भाष्येऽपि प्रतिपादितम् । अतो हि कारकपदेन व्युत्पत्तिदृष्ट्या साक्षात् कर्तैव लक्ष्यते ।

अस्याः कारकसंज्ञाया विचारो भर्तृहरिणा वाक्यपदीये तृतीये काण्डे दिक्समुद्देश्ये प्रकरणे संविशेषं कृतः । क्रियाया विविधानि स्वरूपाणि दिक्शक्त्या अभिव्यज्यन्ते इति तस्य मतम् । भर्तृहरिः दिशं विभुरूपां स्वतन्त्रां शक्तिं मन्यते । यतो हि यया कयाचित् क्रियया आदौ विभागो भवति । विभागस्य कल्पना अवधिमूलिका । विभागो नाम वियोगः । वियोगो नाम पृथग्भवनम् । कस्माच्चन स्थानात् कस्यचन वियोगो भवति । यतो वियोगः स एव वियोगस्य अवधिभूतः । अनया अवधिकल्पनया एव अयं पुरःस्थः, अयं पार्श्वस्थः, अयं समीपस्थः, अयं दूरस्थः, अयं पूर्ववर्ती, अयं पश्चिमवर्ती इति व्यवहारः सपद्यते । विभिन्नानां क्रियाणां संभवो दिक्तत्त्वेनैव शक्यः । अनया दिक्शक्त्या उत्पद्यमानाना

विविधानां क्रियाणां कर्तारः कारकसंज्ञया साधनसंज्ञया वा व्यपदिश्यन्ते । साधनशब्दं विवृण्वन् भर्तृहरिः प्राह–

**क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः ।**

लोके इयं दिक्शक्तिः निमित्तभदैः षड्भिः रूपैः प्रकाशते इति स्फुटमेव प्रतिपादितं भर्तृहरिणा–

**निमित्तभेदादेकैव भिन्ना शक्तिः प्रतीयते ।**

**षोढा कर्तृत्वमेवाहुस्तत्प्रवृत्तेर्निबन्धनम्' ॥**

एवमेतासां क्रियाणां निर्वर्तकानां क्रियासाधनानां कारकाणां वा कर्म, कर्ता, हेतुः (करणम्), संप्रदानम्, अधिकरणं चेति षट् प्रकारा भवन्तीति वाक्यपदीये निरूपितम् । पर तत्रापि आदौ पाणिनिना कुतो नाम अपादानतः कारकविचारः प्रस्तुतः, कुतो वा तदनु सप्रदान-करण-अधिकरणाद्यनुसारी क्रम आश्रित इति प्रश्नः असमाहित एव तिष्ठति ।

अत्र ब्रूमः । भर्तृहरिणा हि कारकविचारे प्रस्तुते प्रथमतः कर्मणा खलु व्यतिरेको नाम विभागो भवतीति समालोच्य व्यतिरेकविचारद्वारैव दिक्तत्त्वमूलकः कारकविचारः प्रारब्धः । स ब्रूते–

**'व्यतिरेकस्य यो हेतुरवधिप्रतिपाद्ययोः।**

**ऋज्वित्येव यतोऽन्येन विना बुद्धिः प्रवर्तते ॥**

**कर्मणो जातिभेदानामभिव्यक्तिर्यदाश्रया ।**

**सर्वैरुपाधिभिर्भिन्ना शक्तिर्दिगिति कथ्यते' ॥**

विभागस्य अवधिभूत यत् तदेव भवति अपादानसंज्ञम् । अत्र क्रियास्वरूपस्य विवरणे वैशेषिक-शास्त्रस्यापि कश्चिद् उपकारो भवति । क्रियामेव वैशेषिकाः कर्मशब्देनापि व्यपदिशन्ति । वैशेषिक-शास्त्रदृष्ट्या 'संयोगविभागयोः अनपेक्षं कारणं कर्म' भवति । येन केनापि कर्मणा प्रथमतो विभाग एव जन्यते । तथा हि पाकेन–तेजःसंयोगविशेषेण घटे रूपपरा वृत्तिः कथ भवतीति विशदयितु या काचित् क्षणप्रक्रिया वैशेषिकैः स्वीकृता तत्र परमाणौ कर्मणि जाते आदौ विभागो जन्यते इति तैः स्वीक्रियते । अतः कारकेषु–क्रियोपकारकेषु अपादानस्य विचारः प्राथम्यमर्हति । तदनु सप्रदानस्य विचारः करणीयः । संप्रदानं नाम दानस्य कर्मणा यम् अभिप्रैति स भवति संप्रदानम् । सिद्धान्तकौमुदीस्थम् इमं वृत्त्यंशं **तत्त्वबोधिनी** विवृणोति यत्-'दानक्रियाकर्मणा कर्ता यम् अभिप्रैति संबध्नाति सबद्धुमीप्सति वा तत् कारकं कर्मसंप्रदानसज्ञकमित्यर्थः ।'

सप्रदानशब्दे दाधानोरुपयोगेन कारकाश्रिते क्रियाविचारे सामान्यतया कर्तव्ये संप्रदानकारकस्य विचारः कथं शक्य इति प्रश्नः समुद्भवति । अत्र खलु क्षणक्रिया उपलक्षणम् । तया क्रियासामान्यं प्रतीयते । अस्ति तथा चिन्तने शेखरकर्तः भाष्यकारस्य च समतिः । अतः क्रियया यदुद्देश्यं लक्ष्यते तस्य संग्रहः अत्र शक्यः । अनेन स्फुट यत् यदुद्दिश्य काऽपि क्रिया विधीयते तस्य विचारः संप्रदानकारके शक्यः । अतः क्रिया यतो विभाग करोति येन च सबन्धं स्थापयति तयोरुभयोर्विचारः अपादान-संप्रदान-कारकक्रमेण सुष्ठु जायते । अनन्तरम् अस्याः क्रियाया यत् साधकतमं तस्य विचारार्थे करणविचारः प्रारब्धः । अनन्तरं यस्मिन् देशे इदं क्रियासामान्यं प्रवर्तते तस्य अधिकरणकारकस्य विचारः पाणिनिना

कृतः । एवं क्रियायाः तन्त्रे स्पष्टे क्रियाफलाश्रयस्य विचारः कर्मकारकरूपेण पाणिनिना अनुष्ठितः । परस्तात् क्रियायाः प्रेरकस्य कर्तुर्विचार आरब्धः । कर्तुः विचारं कारकक्रमान्ते कुर्वतः पाणिनेः कमपि अभिप्राय पश्यामः ।

सृष्टौ कर्माणि द्विविधानि भवन्ति मनुष्यकृतानि घटपटादीनि, अमनुष्यकृतानि च भूपर्वत-नदी-बीजाङ्कुरप्रभृतीनि । परम् इमानि सर्वाण्येव क्रियाजनितानि । क्षित्यङ्कुरादीनां कर्ता कश्चित् ईश्वरः अस्ति न वेति भूयान् विवादविषयः । परं तत्रापि क्रियासामान्यम् उपयोगीति सर्वोपयोगिक्रियास्वरूपं विवरीतुं क्रियासाधकानि अपादानादीनि आदौ विवृतानि । (अनेन परमाणुषु पाकेन क्रमशो घटादौ रूपादिपरिवृत्तिं स्वीकुर्वतां वैशेषिकाणां कार्यस्वरूपम् अपि स्पष्टीकृतं भवति) ।

अत्र प्रश्न उत्पद्यते तर्हि कुतः खलु द्वितीयाध्याये तृतीयपादे कारकप्रतिपादकानां विभक्तीना क्रमो भिन्नः ? तत्रास्ति किंचित् प्रयोजनम् । वर्ततेऽसौ वाक्यप्रयोगस्य विचारः । कारकाणि हि भवन्ति क्रियासंबद्धानि । क्रिया तावत् वाक्येषु प्राधान्येन तिङन्तैः प्रतिपाद्यते । तिङ्प्रत्यया यत् कारकम् अनुसरन्ति, यदनुसारेण परिवर्तन्ते, तत् तिङा अभिहितम् उच्यते । यानि कारकाणि तथा न सन्ति तानि अनभिहितानि उच्यन्ते । अनभिहिताना कारकाणा सख्या भूयसीति आदौ अनभिहिताना कारकाणां प्रयोगे का विभक्तिः प्रयोक्तव्येति प्रश्नं समादधान. पाणिनि. लोकप्रसिद्ध कारकक्रम लक्षयित्वा कर्मप्रतिपादिकायाः द्वितीयायाः आरम्भ कृतवान् । ततः क्रियाफलाश्रयस्य कर्मणः स्वरूपस्य अनुकारं भजत् संप्रदानं प्रतिपादयन्तीं चतुर्थी व्यवृणोत् । अनन्तर तृतीया, पञ्चमी, सप्तमी चेति क्रमं स्वीचकार । अन्ते अभिहित कर्तृ कर्म वा कारकं प्रथमा प्रतिपादयतीति प्रथमा व्यवृणोत् । कारकबहिर्भूतायाः संबन्धप्रतिपादिकायाः षष्ठ्याः प्रतिपादनम् अन्ते अकरोत् ।

अनेन विचारेण इदं स्फुटं यत् प्रथमाध्याये कारकसंज्ञानिरूपणे क्रियायाः स्वरूपस्य शास्त्रीय स्वरूपं मनसिकृत्य पाणिनिः विवरणमकरोत् । द्वितीयाध्याये तु वाक्यप्रयोगदृष्ट्या विभक्तिविवेचने तत्परः क्रमान्तरं स्व्यकरोत् । संभवति दृष्टफलकत्वे अदृष्टकल्पनाया अन्याय्यत्वेन कारकक्रमविचारः अनया दृष्ट्या लक्षितः अष्टाध्यायीकर्तुः पाणिनेः सूक्ष्मेक्षिता प्रकाशयतीति पश्यामः ।

# विश्वैक्य-सन्धायिनी संस्कृत-शिक्षा

**डॉ. नारायणशास्त्री काङ्कुरः**

**वाणीं प्रणौमि गैर्वाणीं कल्याणीं गुणकारिणीम् ।**
**यत्रोत्कीर्णानि पुण्यानि शास्त्राणि प्रचुराणि हि ॥**
**सौवर्णी सौपवर्णीह वाणी विजयतेतराम् ।**
**प्राणन्ति यत्प्रसादेन संसारे सकला गिरः ॥**

भावाभिव्यक्तेः अथवा विचार-सम्प्रेषणस्य प्रमुखम् उपकरणं भाषा एव भवति । सर्वासां भाषाणाम् आदिभाषा अथवा जननी देववाणी संस्कृतभाषा कथ्यते । देवाः एव अस्याः भाषायाः जनकाः सन्ति, यथा हि–"**देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुवार्गस्मानुप सुष्टुतैतु**" इति देव्यथर्वशीर्ष-श्रुतिः प्रमाणयति ।

इयं वाक् पूर्वं प्रकृति-प्रत्ययादि-रूपे सर्वथा अव्याकृता अवर्त्तिष्ट इति बोद्धुम् अशक्यत्वाद् देवाः विश्वोपकार-बुद्ध्या देवराजम् इन्द्रम् अभ्यर्थितवन्तः । सः हि ताम् अव्याकृतां वाचं प्रकृति-प्रत्ययादि-रूपे मध्ये-मध्ये तथा अवच्छिद्य व्याकृतवान् यथा देवानां मनोरथः परिपूर्णः । भवति अत्र तैत्तिरीय-संहिता (6.4.7) श्रुतिः प्रमाणम्–"**ते इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति.........तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते ।**" एतद्-व्याख्यानं च सायणाचार्यः एवम् अकार्षीत्–"**तामखण्डां वाचं मध्ये मध्ये विच्छिद्य प्रकृति-प्रत्यय-विभागं सर्वत्राकरोद्**" इति ।

इन्द्रः हि स्वसमयस्य महान् वैयाकरणः अपि आसीत् । तेन बृहस्पतितः व्याकरणम् अधीतम् । बृहस्पतेः गुरुः ब्रह्मा अविद्यत । इन्द्रस्य शिष्यः भरद्वाजः आसीत् । भरद्वाजः एव ऋषिभ्यः व्याकरण-ज्ञानं व्यतारीत् । ऋषयः ब्राह्मणेभ्यः प्रददुः । तथा हि ऋक्तन्त्रे (1.4) श्रूयते–"**यथाचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः**" इति ।

किन्तु समस्त-शब्दोपदेशस्य प्रतिपदं पाठः सर्वथा दुष्करः एव आसीत् । यथा हि महाभाष्यम् (1.1.1) अत्र प्रमाणम्–"**बृहस्पतिरिन्द्राय दिव्यं वर्ष-सहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, न चान्तं जगाम ।**" किन्तु इन्द्रेण व्याकृतत्वात् सा समस्या सर्वथा निरस्ता समजायत । संस्कृत-व्याकरणस्य विश्वोपकारिता अपि अनेन प्रमाणिता भवति ।

प्रकृति-प्रत्ययादिरूपे व्याकृततया संस्कृतत्वाद् देववाण्याः अपर नाम 'संस्कृतम्' इदम् अपि आबाल-वृद्धं प्रसिद्धं बभूव । आदिकाव्ये वाल्मीकीय-रामायणे (सु. का. 30.17-18) दैवीवाक् 'संस्कृत'–शब्दद्वारा एव व्यवहृता, यथा हि अशोक-वाटिकायां सीतां दृष्ट्वा हनुमतः आत्मचिन्तनम्–

**'वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम् । यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् । रावणं मन्यमाना मां सीता भीता भविष्यति ॥'** महाकवि-दण्डिना अपि काव्यादर्शे (13.3) सुस्पष्टम् एव उक्तम्—**'संस्कृतं नाम दैवीवागन्वाख्याता महर्षिभिः ।'** आचार्यवर्यः यास्कः 'श्वेति भाषायाम्' इति निरुक्ते (1.4) तथा महर्षि-प्रवरः पाणिनिः अपि 'विभाषा भाषायम्' इति अष्टाध्याय्यां (6.1.179) 'भाषा'-शब्देन दैवीं वाचं संस्कृतं मनुष्यैः अपि भाष्यमाणाम् अभिप्रेतवान् ।

अस्याः संस्कृतभाषायाः प्रयोग-क्षेत्रम् अतिविशालम् अवर्त्तिष्ट । यदि कश्चित् शब्दः एकत्र दृष्टिपथं न आयाति, तर्हि तस्य उपलब्धये अन्यत्र अन्वेषणं परामृष्टवान् भगवान् पतञ्जलिः—**'सर्वे खल्वप्येते शब्दा देशान्तरे प्रयुज्यन्ते । न चैवोपलभ्यन्ते । उपलब्धौ यत्नः क्रियताम् । महान् हि शब्दस्य प्रयोग-विषयः । सप्तद्वीपा वसुमती, त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशत- मध्वर्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा बाह्वृच्यं, नवधाथर्वणो वेदो वाकोवाक्यमितिहासः, पुराणमित्येतावञ्छब्दस्य प्रयोगविषयः इति ।** (म. भा. 1.1.1)

अस्याम् एव देववाचि संस्कृतभाषायां समग्र-विश्वोपकारकं समस्तं ज्ञान-विज्ञानं सुरक्षित वरीवर्त्ति । वेदाः ब्राह्मणानि उपनिषदः स्मृतयः रामायणं पुराणानि च अस्याः एव भाषायाः भास्वन्ति रत्नानि सन्ति । भौतिक-विज्ञानं, रसायन-विज्ञानं, जीव-विज्ञानं, वास्तु-विज्ञानं, शिल्प-विज्ञानं, गान्धर्व-विज्ञानं, खगोल-विज्ञानं, वृक्ष-विज्ञानं, भूगर्भीय-विज्ञानं, धातु-विज्ञान, नक्षत्र-विज्ञानं, जल-विज्ञानम्, आयुर्विज्ञानं, राजनीति-विज्ञानम्, अर्थ-विज्ञानं, तन्त्र-मन्त्र-यन्त्र-विज्ञानं, योग-विज्ञानं, हस्त्यश्वायुर्वेद-विज्ञानं, सामुद्रिक-शास्त्र-विज्ञानम् इत्यादि सर्वम् अपि लोकोपयोगि ज्ञानं विज्ञानं संस्कृतभाषायां विलसति । आवश्यकता अस्ति तदनुसन्धानस्य ।

धर्मार्थकाम-कला-दर्शन-नीति-न्यायादिषु कः विषयः अनया भाषया स्पृष्टः न वर्त्तते ? व्याकरण-साहित्य-योग-वेदान्त-कर्मकाण्ड-ज्योतिष-प्रभृति-विषयकाणि शास्त्राणि अपि तु अस्याः एव भाषायाः अनुपमानि अवदानानि विद्यन्ते । एकेन वेदव्यास-मुनिना यावत्या विपुलमात्रायां साहित्यं विरचित, तस्य शतांशम् अपि कश्चित् मानवः अद्य किं कस्याम् अपि भाषायां निर्मातुं शक्नोति ? अस्याः भाषायाः शब्द-कोषाः अपि श्लोकबद्धाः अप्रतिमाः अद्भुताः एव सन्ति ।

किन्तु काल-प्रभावाद् विदेशि-शासनत्वात् च इयं भाषा स्वजन्मभूमौ भारतवर्षे एव साधारणजनैः तथा उपेक्षाम् अगमत्, यथा वर्त्तमाने इयं 'भाषा'-नाम्ना कथ्यमाना अपि शिक्षणीया सञ्जाता । सम्प्रति संस्कृतभाषां शिक्षितुं तद्-वाङ्मयं च अनुशीलयितुं लोकानां सन्तोषजनिका प्रवृत्तिः न दृश्यते । केचन सौभाग्य-शालिनः एव स्वतः प्रेरणया सर्वां सुख-सुविधां परित्यज्य अपि, विना राजकीयम् अध्यादेशम् अपि, आत्मीयं राष्ट्रियं प्राथमिकं धर्मं कर्म च मन्वानाः संस्कृतभाषाम् इमां समनोयोगं शिक्षन्ते, तत्साहित्यं च साभिरुचि समनुशीलयन्ति ।

संस्कृत-वाङ्मये यादृशी जीवनीय-शक्तिः विद्यते, तादृशी अन्यत्र दुर्लभा एव । मानवतां सदाचारितां च यथा इदं सहजं शिक्षयति, तथा अन्यत्र द्रष्टुं क्व मिलेत् ? मानवतातः उपरि उत्थाय

देवत्वम् अपि अनेन एव उपलभ्यते। केवलं देवत्वम् एव न, अपि तु धर्मार्थकामैः सह मोक्षम् अपि प्रदातुम् इतः अधिकं किम् अपि सुसाधनं न अस्ति।

अस्मिन् संस्कृत-वाङ्मये समस्त-जीवमात्रे एकत्वबुद्धि-स्थापिका या अद्वितीया सांस्कृतिकी शक्तिः दृश्यते, तद्-बलाद् एव तु, दूरे न गन्तव्यम्, यदा-कदा अपि कस्मिंश्चित् कोणे काचिद् विपदा आपतति, तां विपदां स्वीयाम् एव मत्वा अन्यकोणस्थाः जनाः तन्निवारणे कटि-बद्धाः भवन्ति। एक-प्रदेशस्य तीर्थस्थलम् आत्मीयम् एव अवगत्य इतरप्रदेशीयाः तस्य तीर्थस्थलस्य यात्रां कुर्वन्ति। कुम्भपर्व-स्थलम् अस्य प्रत्यक्षं निदर्शनं विद्यते यत्र विभिन्न-भाषा-भाषिणः अपि, विभिन्नाचार-विचाराः अपि, विभिन्नाहार-विहाराः अपि, विभिन्न-धर्म-सम्प्रदाय-मतावलम्बिनः अपि सर्वे भेदभावं विस्मृत्य एकत्र मिलन्ति।

**'ॐ सह नाववतु, सह नौ भुनक्तु, सह वीर्यं करवावहै, तेजस्वि नावधीतमस्तु, मा विद्विषावहै', 'तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्', 'उदारचरितानां तु वसुधैव कुटुम्बकम्', 'परोपकारः पुण्याय पापाय परपीडनम्', 'सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः। सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःख-भाग् भवेत्'** ॥ इत्यादिकाः उदात्तभावनाः संस्कृतवाङ्मयं विहाय किम् अन्यद् वाङ्मयम् उद्भावयति ? अद्य विविध-विविध-विद्वेष-वैमनस्यादि-दुर्भाव-ग्रस्तं विविध-भ्रष्टाचार-प्रदूषितं परस्परम् अभिभावयितु समुद्यतं स्वीयम् एव स्वार्थं साधयितुं सलग्नं विश्वं स्वं स्वं चरित्रं शिक्षयित्वा सन्मार्गम् आनेतुम् एकमात्रं संस्कृतभाषा तत्साहित्यं च प्रभवति इति केन न स्वीकार्यं स्यात् ?

संस्कृतानुशीली जनः कदापि भ्रष्टाचारी किं वा अपराधी न भवति। परस्त्रीषु मातृवद् बुद्धिः, परद्रव्येषु लोष्टवद् दृष्टिः, सर्वप्राणिषु आत्मवद् व्यवहारः, स्वामिनि अनुरक्तिः, माता-पित्रोः गुरुजनेषु च श्रद्धा, ईश्वरे आस्तिकता, अनीतेः दूरे अवस्थानं, पापाद् निवृत्तिः, राष्ट्रे प्रेम इत्यादयः सद्गुणाः संस्कृत-सम्पर्काद् एव तु व्यक्तौ समाविशन्ति।

अद्यावधि कश्चित् अपि संस्कृतज्ञः जनः स्त्रीषु बलात्कारी, परधन-हर्त्ता, गुरुजन-निहन्ता, देवमूर्त्ति-चौर्यकारी, स्वामि-वञ्चकः, राष्ट्रद्रोही च नैव श्रुतः, न च एतादृश-घृणितापराधकारिषु कदापि निगृहीतः दण्डितः च एव। तत्कथं न अमृता संस्कृतभाषा तदाश्रिता च सर्वोपकारिणी संस्कृतिः श्रेयसे समुपास्यताम् ?

संस्कृत-वैशिष्ट्य-विषये किम् अधिकं निवेदयामि ? तद्-विषये संक्षेपेण मम सद्यः प्रकाशितायाः 'अभिनव-संस्कृत-सुभाषित-सप्तशती'तः समुद्धृता काचित् छन्दोमयी वाणी इह प्रासङ्गिकी भवेत्—

**संस्कृत-ज्ञान-शून्यानां भ्रष्टाचारः प्रजायते।**
**अतः संस्कृत-शिक्षा प्राक् प्रचार्या किं न सर्वतः ॥ 1 ॥**

**यावत् संस्कृत-शिक्षा न प्रदास्यते गृहे-गृहे।**
**भ्रष्टाचारादि-रोगाणां तावदन्तो न सम्भवः ॥ 2 ॥**

**शिक्षा संस्कृत-भाषायाः स्वल्पव्ययेऽतिसाधिका।**
**भ्रष्टाचारस्ततो नश्येत् स्वर्ग-मोक्षौ ददाति सा ॥ 3 ॥**

संस्कृतस्य पवित्रस्य स्वाध्यायः क्रियतां सदा ।
मनःशुद्धिः कर्मशुद्धिर्यत एतेन जायते ॥ 4 ॥
संस्काराः संस्कृतिश्चैव संस्कृते विलसन्ति वै ।
एतत्सर्वं विना कोऽपि संस्कृतो न भवेत् क्वचित् ॥ 5 ॥
वैदिकी संस्कृता भाषा त्रैलोक्ये व्यापिनी न किम् ?
द्वयीमेतामनादृत्य सुखं प्राप्नोति को जनः ? ॥ 6 ॥
वेदान् पुराणानि तथेतराणि शास्त्राणि बोद्धुं पठ संस्कृतं प्राक् ।
यतस्तदीयाऽभ्यसनेन सम्यग् लोक-द्वयं सुध्रियते हि तात ! ॥ 7 ॥
संस्कृतज्ञो न सामान्यः शिष्टो भवति सोऽन्यतः ।
विद्या-विनय-सम्पन्नः सदाचारी सदा हि सः ॥ 8 ॥
संस्कृतज्ञो यदा नात्म-हत्यां प्रकुरुते क्वचित् ।
पर-हत्या तदा तेन कदापि नैव जायते ॥ 9 ॥
संस्कृतेन कृतं कस्य भूर्यनिष्टं कदा किमु ?
येन तत् त्यज्यते लोकैः सर्पो विषधरो यथा ॥ 10 ॥
संस्कृते संस्कृतिः प्रोक्ता विश्व-कल्याण-कारिणी ।
सम्यगाचरिता सा तु भुवं स्वर्गं करोति हि ॥ 11 ॥
संस्कृतं कामधुग् भाषा तत्सेवी नाऽवसीदति ।
नाऽनिष्टं कुरुतेऽन्यस्य सदा सन्मार्गमाश्रितः ॥ 12 ॥
संस्कृतं कामधेनुर्हि यामाश्रित्य सुखी भवेत् ।
स्वयं सुखी कथं नाऽन्यं कुर्वीत सुखिनं जनः ॥ 13 ॥
संस्कृतं नैकदेशस्य नैकवर्गस्य चापि तत् ।
तत्र सर्वाधिकारोऽस्ति पञ्च-तत्त्वां यथैव हि ॥ 14 ॥
संस्कृतं किं न शिक्ष्येत यत्साहित्यमनुत्तमम् ।
देवा अप्याशु तुष्यन्ति संस्कृत-स्तोत्र-गायके ॥ 15 ॥
संस्कृतं मधुरा भाषा सदाचार-निरूपिणी ।
एतां त्यक्त्वाऽन्यसेवी यो मन्दभाग्यः स मूढधीः ॥ 16 ॥
संस्कृतं मधुरा भाषा मधुरं तत्र नाटकम् ।
नाटकस्य प्रयोगेण मधुरं किं भवेन्नहि ? ॥ 17 ॥
संस्कृतं यदि नष्टं स्यात् संस्कृतिर्नश्यति ध्रुवम् ।
संस्कृतावथ नष्टायां स्वातन्त्र्यं सुखदं कुतः ? ॥ 18 ॥
संस्कृतं सर्व-भाषाणां जननी चापि पोषिका ।
तामुपेक्ष्य कथं तासां जीवनं पोषणं भवेत् ? ॥ 19 ॥

संस्कृतं मृतभाषा चेत् कस्तां व्यवहरेत् सुधीः ?
मृतः पुष्णाति किञ्चिन्न नित्यं पुष्णाति किन्त्वियम् ॥ 20 ॥
संस्कृतं संस्कृतिश्चैव श्रेयः करोति निश्चितम् ।
अस्य प्रचारका धन्याः साधुवाद्याः पुनः पुनः ॥ 21 ॥
संस्कृतं ये सुसेवन्ते कवयन्ते च तत्र ये ।
ये पुनर्मानयन्ते तान् धन्यास्ते सन्ति भूरिशः ॥ 22 ।
संस्कृतं ये प्रपुष्यन्ति सेवन्ते ये च संस्कृतम् ।
संस्कृतं ये प्रशंसन्ति चिरञ्जीवन्तु ते जनाः ॥ 23 ॥
संस्कृतं शिक्षितं येन स तच्छास्त्राणि बोधति ।
शास्त्राचारी पुनर्भूत्वा त्रिलोक्यां स प्रमोदते ॥ 24 ॥
संस्कृतं योऽनधीत्यैव सदाचारी बुभूषति ।
मूलाधारं विना सोऽज्ञो निर्मित्सति गृहन्नरः ॥ 25 ॥
संस्कृतं समधीत्यापि सदाचारी न योऽभवत् ।
बक-भक्तः स हा हन्त ! सन्दूषयति संस्कृतम् ॥ 26 ॥
संस्कृतं येन नाऽधीतं पूर्वं वयसि सद्गुरोः ।
पश्चात्तपति प्राज्यं स परे वयसि संस्थितः ॥ 27 ॥
या काऽपि भाषा जगतीह जाता तस्याः प्रसूः संस्कृतदेवभाषा ।
अन्यत्र यच्चिन्तनमस्ति किञ्चित् तस्यापि हेतुः किमियं न भाषा ? ॥ 28 ॥
संस्कृतं यो न जानाति स वै वैशाख-नन्दनः ।
संस्कृतं योऽभिजानाति स देवो न तु मानुषः ॥ 29 ॥

संस्कृतभाषायाः व्याकरणं तु सर्वथा अप्रतिमं नवनव-शब्द-निर्माणाद्भुत-शक्ति-सम्पन्नं च वरीवर्त्ति । न केवलं भारतीयानाम् एव भाषाणां संस्कारकम् इदं व्याकरणं, प्रत्युत अनेन भारतीयेतराङ्ग्लादि-भाषीय-शब्दाः अपि संस्कृत-शब्दाः इव प्रकृति-प्रत्ययादि-कल्पनया ससूत्र-निर्देशं व्युत्पादयितुं शक्यन्ते, तेषां सार्थकता च एवं साधयितुं शक्यते । विद्वन्मनोविनोदार्थम् इह केचन आङ्ग्ल-भाषा-शब्दाः सनिर्वचनं व्युत्पाद्यन्ते–

**Bill.** बिलति भिनत्ति ग्राहकस्य हृदयम् इति बिलः । बिल भेदने 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः ।

**Diary.** डीयते उड्डीयते इति डयः । डीङ् विहायसा गतौ 'नन्दि-ग्रहिपचादिभ्यो ल्युणिन्यचः' इति अच् । डयः एव डायः 'प्रज्ञादिभ्योऽण्' इति अण् अथवा डयानां समूहः इति डायः 'तस्य समूहः' इति अण् । डायम् उड्डीयमानं विचार-समूहं रीणाति आदत्ते स्वस्मिन् इति डायरी । री रेषणे आदाने 'क्विप् च' इति क्विप् ।.

**Fund** फणति गच्छति संगृहीतं भवति धनं यत्र सः फण्डः, फण गतौ 'अमन्ताड्डः' इति ड-प्रत्ययः।

**Ill.** इलति स्वपिति अस्वास्थ्यवशात्, क्षिपति वा स्वम् अस्वास्थ्ये इति इलः। इल स्वप्न-क्षेपणयोः इगुपध-लक्षणः कः। अथवा एलयति प्रेरयति जनान् स्वसेवार्थम् अस्वास्थ्यवशाद् यः सः इलः। इल प्रेरणे पूर्ववत् क-प्रत्ययः।

**Jail** जेलति भक्षति अन्तार्धारयति अपराधिनम् अपराधिनः वा अपराधान् प्रायश्चित्त-द्वारा इति जेलः। जिल अदने पचाद्यच्।

**Lawn** लाति गृह्णाति संस्थापयति स्वस्मिन् घासम् इति लानः। लातेः 'कृत्यल्युटो बहुलम्' इति ल्युट्, तस्य च 'युवोरनाकौ' इति अनादेशः।

**Mad** मेडति उन्माद्यति इति मेडः। मेड़ उन्मादने पचाद्यच्।

**Net** नेशति समादधाति स्वस्मिन् जन्तून् इति नेट्। णिश् समाधौ 'अन्येभ्योऽपि दृश्यन्ते' इति विच्। जालम् इति तदर्थः। तेन स्वस्मिन् जन्तवः सम्यक् आधीयन्ते स्थाप्यन्ते एव। अथवा न एटति निर्गच्छति प्रवेशानन्तरं यस्मात् सः नेटः। इट गतौ पचाद्यच्।

**Operation** आ समन्तात् अप दूरे रेशनं हिंसनं दूषितांशस्य शल्यक्रियया इति आपरेशनम्। रिश हिंसायां भावे ल्युट्। तस्य युस्थाने 'युवोरनाकौ' इति अनादेशः।

**Wall** वलन्ते संवृण्वन्ति आत्मानम् अग्रे गमनात् जनाः यस्मात् सः वालः। भित्तिः इति तदर्थः। वल संवरणे संचरणे च 'अकर्त्तरि च कारके सञ्ज्ञायाम्' इति घञ्, उपधावृद्धिः।

एवं व्याकरणोपेतायाः संस्कृतभाषायाः शब्दसम्पत्त्या व्याकरण-रसायनेन च न केवलं भारतीयाः भाषाः एव, अपि तु वैदेशिक-भाषाः अपि यस्मिन् कस्मिन् अपि रूपे अवश्यं प्रभाविताः सन्ति। तस्माद् एव कश्चित् अपि ईदृशः विदेशी विश्वविद्यालयः न विद्यते, यस्मिन् अस्याः अध्ययनम् अध्यापनं च सविशेषं प्रचलितं न भवेत्। वैज्ञानिकाः अपि गणकयन्त्रोपयुक्ताम् इमां भाषां सर्वश्रेष्ठां स्वीकर्तुं प्रवृत्ताः। अगणितैः विदेशि-विद्वद्भिः अपि संस्कृत-वाङ्मयस्य अनेकासु शाखासु समनोयोगम् अनुशीलनं व्याख्यानम् अनुसन्धानं च समनुष्ठितम्।

तेषाम् अत्र भारतवर्षे शासन-समये संस्कृतस्य यथा प्रौढपाण्डित्यं तथा तत्प्रति समाकर्षणं च दृष्टं, तादृशम् अद्य क्व विद्यते ? 'ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति अनुशासनं कः अनुसरति ? संस्कृतोपजीविनां विदुषां परिवारे अपि संस्कृतभाषानुरागः क्षीयमाणः अस्ति। आयुर्वेदज्ञाः वैद्याः अपि विना संस्कृतविशेषज्ञानम् एव आयुर्वेदं पाठयितुं प्रवृत्ताः। यदा सर्वे अपि आयुर्वेद-ग्रन्थाः तेषां व्याख्यादिकं च संस्कृते एव मौलिकरूपेण तिष्ठति, तदा संस्कृतस्य पर्याप्तं समुचितं च ज्ञानं विना कथं तद्-रहस्यम् अवबोद्धुं शक्यते ? 'वैद्यः'-शब्दतः सम्बोधने संस्कृतशब्द-पदवी-धारणे तु तेषां लज्जा आयाति। आत्मानं 'डाक्टर'-नाम्ना शब्दापयितुं महद् गौरवं ते अनुभवन्ति। स्वपरीक्षोपाधि-नाम अपि आङ्ग्लभाषामयम् एव सम्पादितवन्तः। अत एव तु मया खिन्न-मनस्केन तेषाम् उद्बोधनार्थं 'सत्यार्थ-प्रकाशः' एवं मुद्रापितः–

**आयुर्वेदार्ष-शास्त्राणि सन्ति सर्वाणि संस्कृते ।**
**तेषां व्याख्यादिकं चापि संस्कृते ननु विद्यते ॥ 1 ॥**
**प्रौढं ज्ञानं न यावत् स्यात् संस्कृतस्य सुभास्वरम् ।**
**तावत् तत्त्वं सटीकानां तच्छास्त्राणां न बुध्यते ॥ 2 ॥**
**साहित्यं व्याकृतिं धर्मं दर्शनं ज्यौतिषं तथा ।**
**कर्मकाण्डं विनाऽप्येष आयुर्वेदो न बुध्यते ॥ 3 ॥**
**आयुर्वेदीय-तत्त्वार्थः संस्कृतेतर-भाषया ।**
**विज्ञातुं शक्यते नैव सत्यमेतद् ब्रवीम्यहम् ॥ 4 ॥**
**संस्कृत-ज्ञान-हीना ये वैद्यम्मन्याश्चिकित्सकाः ।**
**आयुर्वेद-कलङ्कास्ते रुग्णान् निघ्नन्त्यसंशयम् ॥ 5 ॥**
**यथा नैवं कुवैद्याः स्यू रुग्ण-प्राणापहारिणः ।**
**आयुर्वेदस्तथाऽध्याप्यः सार्धं संस्कृत-भाषया ॥ 6 ॥**

संस्कृतभाषायाः उपरि चर्चिताः विशेषताः दृष्ट्वा तथा संस्कृतविदुषा शैथिल्यम् उत्सारयितुं जनसाधारणे च संस्कृताभ्यासं प्रति ध्यानम् आक्रष्टुं संस्कृतानुरागी भारतसर्वकारः प्रादेशिक-सर्वकाराणां सहयोगेन समस्ते देशे प्रतिवर्षं श्रावण्यां पूर्णिमायां संस्कृतदिवसं सम्मानयितुं समुचितं सुप्रशस्तम् एव अभिनन्दनीयं निर्णयं गृहीतवान् । तेन एव प्रसङ्गेन स्वसुविधानुसारम् आङ्ग्ले अपि देशे सर्वत्र संस्कृत-दिवसः मान्यते ।

अस्य आयोजनस्य सर्वांशतः सार्थकता तदा एव भवेद् यदा–

(1) संस्कृतं शिक्षितुम् उद्यतानां कृते आयोजकैः नियमितः संस्कृत-शिक्षण-प्रबन्धः क्रियेत । अधिकतरं प्रबन्धाभावेन एव जनाः संस्कृताभ्यासतः विरज्यन्ति ।

(2) आयुर्वेदाध्यायिनां कृते अपि आयुर्वेदेन सह संस्कृतम् अध्येतुं व्यवस्था करणीया एव ।

(3) तेषां परीक्षाणां माध्यमं संस्कृतं तु रक्षणीयम् एव, संस्कृतभाषायां शोधप्रबन्धलेखनम् अपि अनिवार्यं कर्त्तव्यम् ।

(4) संस्कृताभ्यास-वर्धनार्थं साप्ताहिक-पाक्षिक-मासिक-गोष्ठ्यः रोचक-कार्यक्रमैः सह आयोजनीयाः ।

(5) परस्परं सम्भाषणं पत्र-व्यवहारः च सदा संस्कृतभाषया एव सम्पाद्येत, येन अन्येभ्यः अपि प्रोत्साहनं प्रेरणा च मिलेत् ।

(6) संस्कृतभाषां सुवाच्यां सुबोध्यां च अनुभावयितुं लेखकैः सदा एव गद्य-लेखने पदेषु परस्परं सन्धिकरण-मोहः परित्याज्य एव ।

(7) अन्य-भाषासु प्रचलिताः परिचिताः संस्कृत-शब्दाः एव संस्कृत-भाषायां प्रयोक्तव्याः ।

(8) आकाशवाणीतः प्रतिदिनं प्रातः-सायं प्रसारिताः संस्कृत-वार्ताः अन्ये च संस्कृत-कार्यक्रमाः अवश्यं श्रोतव्याः, दूरदर्शने प्रदर्शिताः अपि संस्कृत-कार्यक्रमाः नैव परित्याज्याः ।

(9) नियतकालिकाः संस्कृत-पत्र-पत्रिकाः पठनीयाः, तथा संस्कृतभाषेतर-दैनिक-पत्रेषु संस्कृत-समाचार-स्तम्भं प्रवर्त्तयितुं तद्-व्यवस्थापकाः प्रोत्साहनीयाः, स्वयं संस्कृतज्ञैः च अग्रे आगत्य वेतनं अगृहीत्वा लेखन-सम्पादनादि द्वारा तस्य स्तम्भस्य संचालने सहयोगः प्रदातव्यः ।

अत्र उदाहरणं जयपुर-बीकानेर-कोटा-फरीदाबाद(हरियाणा)तः प्रकाश्यमानं हिन्दीभाषायाः दैनिकम् 'अधिकार'-पत्रं विगत-20-21 वर्षेभ्यः 'संस्कृत-समाचार-स्तम्भं संस्थाप्य तद्-द्वारा संस्कृत-भाषायाः अनुपम-सेवा-कारकम् अस्ति ।

किं बहुना, संस्कृत-प्रचार-प्रसारार्थं यत् किम् अपि क्रियेत, तेन आत्महितेन सह विश्वहितम् एव सम्पत्स्यते ।

**गीर्वाण-वाणी रमणी पुराणी कल्याण-कर्त्री कलि-पाप-हर्त्री ।**
**काम्या न केषां क्व कथं कदा किं वन्याऽभिनन्द्या सततं पवित्रा ॥**



एव कश्चित् अपि ईदृशः विदेशी विश्वविद्यालयः न विद्यते, यस्मिन् अस्याः अध्ययनम् अध्यापन च सविशेषं प्रचलितं न भवेत् । वैज्ञानिकाः अपि गणकयन्त्रोपयुक्ताम् इमां भाषां सर्वश्रेष्ठां स्वीकर्तुं प्रवृत्ताः । अगणितैः विदेशि-विद्वद्भिः अपि संस्कृत-वाङ्मयस्य अनेकासु शाखासु समनोयोगम् अनुशीलनं व्याख्यानम् अनुसन्धानं च समनुष्ठितम् ।

तेषाम् अत्र भारतवर्षे शासन-समये संस्कृतस्य यथा प्रौढपाण्डित्यं तथा तत्प्रति समाकर्षणं च दृष्टं, तादृशम् अद्य क्व विद्यते ? 'ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति अनुशासनं कः अनुसरति ? संस्कृतोपजीविनां विदुषां परिवारे अपि संस्कृतभाषानुरागः क्षीयमाणः अस्ति । आयुर्वेदज्ञाः वैद्याः अपि विना संस्कृतविशेषज्ञानम् एव आयुर्वेदं पाठयितुं प्रवृत्ताः । यदा सर्वे अपि आयुर्वेद-ग्रन्थाः तेषां व्याख्यादिकं च संस्कृते एव मौलिकरूपेण तिष्ठति, तदा संस्कृतस्य पर्याप्तं समुचितं च ज्ञानं विना कथं तद्-रहस्यम् अवबोद्धुं शक्यते ? 'वैद्यः'-शब्दतः सम्बोधने संस्कृतशब्द-पदवी-धारणे तु तेषां लज्जा आयाति । आत्मानं 'डाक्टर'-नाम्ना शब्दापयितुं महद् गौरवं ते अनुभवन्ति । स्वपरीक्षोपाधि-नाम अपि आङ्ग्लभाषामयम् एव सम्पादितवन्तः । अत एव तु मया खिन्न-मनस्केन तेषाम् उद्बोधनार्थं 'सत्यार्थ-प्रकाशः' एवं मुद्रापितः–

# संस्कृत-शिक्षा-माहात्म्यम्

### श्रीकुमारनाथभट्टाचार्यः

भारतस्य नदा नद्यः, पर्वताः प्रस्रवणाः गगनं पवनं वृक्षा वनस्पतयः, लता गुल्माः ओषधयः, कीटाः पतङ्गाः, दंशा मशकाः, पशवः पक्षिणः, सरीसृपा बिलेशयाः, नरा नार्यः, मुनयो ऋषयः, यक्षा राक्षसाः, गन्धर्वाः किन्नराः, देवा दानवाः, सर्वे एव अमृतनिःस्यन्दिनः संस्कृतस्य मधुमयाः प्रकाशाः । भारतस्य प्राणाः भारतस्य हृदयं, भारतस्य सर्वा प्रकृतिः मधु क्षरन्ति नियतम् ।

आकारैः इङ्गितैः अभिधाभिः लक्षणाभिः व्यञ्जनाभिः नृत्यैः गीतैः वादनैः चित्तकर्मभिः चारुशिल्पैः स्थापत्यशिल्पैः काव्यैः नाटकैः सौन्दर्यतत्त्वैः साहित्यैः दर्शनशास्त्रैः, भावस्तबकैः, प्रेमनिवेदनैः, भक्तिपूरिताभिः अनन्याभिः साधनाभिः शनैः शनैः किमपि मनोहरं संस्कृतसमुद्बोधितं चिन्मयम् आनन्दनिकेतनम् जीवनशतदलं विकासम् आप्नोति ।

निर्झरस्य निरवच्छिन्ने झङ्कृते, मयूराणां मनोमादने केकारवे, वनान्तसञ्चारिणि कलनादीनि सरितां स्रोतसि, कोकिलानां कुहुरवे, हिमालयस्य ध्यानैकताने मौनमूके महामहिम्नि, तारामण्डलस्य विश्व-व्यापिनि विपुले विस्तारे, सागराणां सततसञ्चारे कल्लोलकोलाहले, विटपिविपुलाया वनभूमेः रहस्यमये रोमाञ्चसञ्चारे झिल्लीझङ्कारे, वैदिकानां बालकानां सुमधुरे सामगाने, सङ्गीतस्य सप्तधा स्वरमूर्च्छनासु, योगिभिः अनुभूते अनाहतनादे, षण्णां ऋतूनाम् आवेदनमयेषु आवर्तनेषु, प्राणिनां प्राणनकर्मणि मनसो मनने, बुद्धेः बोधे, स्वर्णोज्ज्वलां सकलशक्तिदायिनीं संस्कृतवाणीम् एव वयम् अवलोकयामः ।

जीवनस्य हर्षे विषादे, आनन्दे दुःखे, उत्थाने पतने, जये, पराजये, सर्वत्रैव समानरूपेण संस्थिता हृदयवासिनी सुमधुरभाषिणी वराभयदायिनी संस्कृतवाणी अस्मान् आलोकोज्ज्वलम् पुरोऽवस्थितम् पन्थानं प्रदर्शयति ।

मुनीनां ऋषीणाञ्च तत्त्वस्पर्शिनि प्रज्ञोज्ज्वले ज्ञानसमुन्मेषे, वयं संस्कृतस्यैव दिव्यं विततं विभावं विकासं च विलोकयामः । परःसहस्रेभ्यो वर्षेभ्यो भारतीयैः मुनिभिः ऋषिभिश्च अखण्डेन ध्यानेन लब्धम् अमृतोपमम् ज्ञानराशिम् इयमेव भाषा स्ववक्षसि साग्रहं सततं सञ्चिनोति ।

संस्कृतं मृतभाषेति जल्पतां जिह्वा न जिह्रेति कथम् ? प्राणप्राचुर्येण प्राणन्ती अन्यांश्च नियतं प्राणयन्ती इयं भाषा मृत्युवशं गता इति कथा वृथावचो-विजृम्भणम् एव विभाति । देहे, प्राणे, मनसि बोधे बोधातीते च स्तरे क्रमोन्नतेन आत्मविकासेन सम्भावयति संस्कृतम् । पुनः पुनरनुशीलनेन आशाभङ्गजनितः अवसादो नश्यति; दुश्चिन्ता औदासीन्यम् अनिच्छा च अपगच्छन्ति । समायाति च मनसि अप्रतिरोध्या काचन कर्मयोगसमुत्था सुमहतीशक्तिः, यया शक्त्या समुद्बुद्धाः छात्राः सततोद्यमिनः,

कष्टसहिष्णवः, सत्यनिष्ठाः, सदाचारपरायणाः, दृढसंकल्पाः, अनलसाः कर्तव्यपरायणाश्च भवेयुः । जीविकालाभार्थं प्रवर्तितासु प्रतियोगितासु साफल्यलाभाय संस्कृतसञ्चारिता इयमुद्यमशक्तिः अतीव अपेक्षिता। यस्या भाषायां कर्मणो जयगानं पुरुषकारस्य च प्रशंसनम् प्रतिपदं प्राप्यते तस्या अनुशीलनेन मानवानां जीवनम् अध्यवसायशीलं सफलं च भवेत् । सौभाग्यवशात् प्रतिदिन संस्कृतस्य पठने लेखने, श्रवणे भाषणे च प्रवृत्तिः प्रवृत्ता सती शनैः शनैः उन्मोचयति अज्ञानस्य आवरणम् । सर्वम् आवरणम् विदार्य आविर्भवति बुद्धिः तमोपहा । महता महिम्ना मण्डितायाः तस्याः स्निग्धेन समुज्ज्वलेन ज्योतिषा प्रदीप्तं प्रह्लादितं भवति भुवनम् । आनन्दस्य शिहरणेन बुद्धेः गुणाः उन्मीलिता भवन्ति । अन्तर्निरुद्ध भाव भाषायां निवेशयितुं समर्थो जनः सार्थकताम् अनुभवति । भावेन सह भाषाया विरहो विगतो भवति । भाषया सह भावस्य परिचयः परिणयश्च उच्छ्वसिताम् आनन्दधारां प्रसूते । स च मूकम् अपि प्रगल्भं करोति, जडमतिम् अपि बुद्धेः दीप्त्या उद्‌भाषितं करोति ।

सर्वतः सञ्चारी संस्कृतस्य महिमा सामाजिकं दोषचयं विनाशयति । अधुनातने काले हिंसाद्वेषयोः द्वन्द्वेन दूषितं भवति समाजजीवनम् । भारतस्य विविधेषु प्रान्तेषु आञ्चलिकतावादः सस्पर्द्धम् मस्तकम् उन्नमयति । एकेन प्रदेशेन सह प्रदेशान्तरस्य विवादो विपुलीभवति । स्वप्रदेशस्य संस्कृतिं बहुमन्यमाना जनाः प्रदेशान्तरस्य भाषां संस्कृतिञ्च अधः कुर्वन्ति । तत्तु अन्ये न सहन्ते । ते न जानन्ति यद् एकस्या एव संस्कृतभाषाया एताः सर्वा भाषाः संस्कृतयश्च समुद्‌भूताः । संस्कृत तथा संस्कृतवाहिता संस्कृतिश्च भारतस्य सर्वासाम् एव भाषाणा संस्कृतीनाञ्च जननी इति जानता पारस्परिक द्वन्द्वं ह्रासम् उपगच्छेत् । सर्वे जानीयुः यत् सर्वे एव भारतवासिनः एकस्या एव भारतमातुः सन्ताना. । सहोदरेण सह कलहो न कल्याणाय कल्पते इति महीयसी मतिः तेषां मनसि समुदेष्यति ।

पुराणेषु बहुधा भारतवसुन्धरायाः अतिशयिताः प्रशंसा विवृता विद्यन्ते । ता वर्णनाः पठतां मानवानां भारतप्रीतिः दृढलग्ना भवेत् । भारते जन्मलाभस्य विधातृविहित किञ्चित् विशिष्टम् उद्देश्यम् अस्ति । भारतं कर्मभूमिः, अन्ये देशा भोगभूमयः । आत्मिकं कल्याण कामयमाना मानवा बहूना जन्मनां साधनया भारते जन्म लभन्ते इति विष्णुपुराणं ब्रवीति । (वि पु. 2/3/24) देवा अपि भारते जन्मलाभाय लालायन्ते । यतो भारते एव विहितया साधनया आत्मोन्नतेः स्वर्णोज्ज्वला सम्भावना सफला भवति । स्वर्गेऽपि सा सम्भावना सुदूरपराहता । चतुरशीतिलक्षजन्मनाम् अनन्तरम् मानवजीवनं लभ्यते । ततोऽप्यधिकतरेण पुण्यपरिपाकेण भारते जन्मलाभो भवति । भारतं प्रति एतादृशं प्रशंसावचनं जनाना भारतप्रीतिं समधिकाम् उपजनयति । एतादृशीं भारतप्रीतिं विनां भारते वसन्तोऽपि मानवा अभारतीया भवन्ति ! संस्कृतमेव तादृशीं भारतप्रीतिम् उपजनयति ।

एतावता आलोचनेन ये तावत् संस्कृतस्य उपयोगाः उपलब्धाः, ते जीवलोकस्य विकासाय एकपाद्‌विभूतिभूता एव संस्कृतस्य संकीर्त्यन्ते । त्रिपाद्‌विभूतिभूता तु अनन्ता विभूतयः संस्कृतस्य क्रमसज्जित क्रमसमुन्मेषसुन्दरं स्तरसमूहम् अतिक्रम्य अधिष्ठिते जगदतीते स्तरे महामानवैः ऋषिभिः योगिभिश्च केवलम् उपलक्ष्यन्ते । अनाहतेन 'नादेन समुपलक्षिता सा इयं दैवीवाक् वैखरीं मध्यमां पश्यन्तीम् अतिक्रम्य परां सत्तां स्पृशति, लीयते च तत्रैव परानन्दसन्दोहतुन्दिले अनन्ये तत्त्वे ।

संस्कृतसम्प्रदर्शिते राजपथे विचरतां विदुषाम् एतस्यामवस्थायां सप्तविधा प्रान्तभूमिः प्रज्ञा प्रादुर्भवति । विज्ञातव्यमखिलं भवति विज्ञातम् । हातव्याः सर्वे बन्धहेतवो हताः । कैवल्यप्राप्त्या प्राप्तव्यमखिलं प्राप्तम्, अतोऽन्यत् न किञ्चिदपि प्राप्तव्यमस्ति । विवेकख्यातिसम्पादनेन कर्तव्यमखिलं कृतम्, नातः परम् अवशिष्यते किञ्चिदपि कर्त्तव्यम् । बुद्धिसत्त्वं कृतार्थम्, बुद्ध्यादिरूपा गुणा अपि गिरिशिखरच्युता इव ग्रावाणो निरवस्थानाः स्वकारणे प्रलयाभिमुखा सम्पातेनास्तमात्यन्तिकं गच्छन्ति । नास्ति तेषां पुनः प्ररोहः । गुणातीतः स्वरूपमात्रज्योतिरमलः केवली पुरुषः स्वरूपप्रतिष्ठः स्वस्थोऽवतिष्ठते । (योगदर्शनम्, 2/27)

अविद्यया विवेके तिरस्क्रियमाणे हिरण्यगर्भमारभ्य मनुष्यपर्यन्तेषु जीवेषु ब्रह्मानन्दः क्रमापक्षीयमाणो लौकिकः सम्पद्यते । स एव च ब्रह्मानन्दो मनुष्यगन्धर्वादिषु हिरण्यगर्भपर्यन्तम् उत्तरोत्तरभूमिषु शतगुणोत्कर्षयुक्तः अकामहते श्रोत्रिये निरतिशयतामनुभवति इति वेदवचनम् । (तैत्तिरीयारण्यकम्, प्रपा. ४ अनु 2) सोपानपरम्परा इव क्रमोन्नताः स्तरशः सञ्चिता जीवनविकासस्य अनन्ता भूमयो भवन्ति । तासु अधराम् अधराम् भूमिम् अधिरुह्य तत् सन्निहितासु उत्तरासु भूमिषु आरोहणस्य अधिकारः अधिगतो भवति । अशेषैः उपायनैरधिकारिणम् अभिनन्दयितुम् सस्नेह-माह्वयन्ति एता भूमयः, स्वाधिकारानुरूपं च भूमीनां वरणं कामयन्ते । स्वात्मलाभस्य सन्निहिततरं च अधिकारिणं क्रमशो विदधति ।

अखण्डमण्डलाकारं ज्योतिषा राशिभी रमणीयम् असमाभिः सुषमाभिः समन्तात् समावृतं भुवनमनोहराणा वर्णालीना विच्छुरणेन विमोहनम् अमलधवलं सर्वेषां जगतां स्पन्दनानां केन्द्रस्थले विराजमानं निर्गुण निरामय निरातङ्कं, जनानां जीवनप्रवाहस्य चरमं सारतमं सत्त्व दिव्य भागवतं धाम शोभतेतमाम् । तदेव दिव्य धाम प्रापयितुम् एताः सर्वाः संस्कृतसंगठिता भूमयो मानवम् उदारेण आह्वानेन सस्नेह स्वाङ्गीकुर्वन्ति ।



# संस्कृत-पत्रकारिता

## श्री. चित्तरंजन दयाल सिंह कौशलः

सम्मान्याः ! प्रबुद्धाः ! संस्कृतज्ञाः ! विश्वविश्रुते लोकतन्त्रे भारते पत्र-पत्रिकाणामुपयोगित्वं सुविदितमेव लोकतन्त्रस्य अयं चतुर्थः स्तम्भः परिगण्यते । जनानां जागरूकतायै सम्यग्रूपेण प्रबोधनार्थञ्च सर्वत्र भूरिशः विविधभाषामाध्यमैः पत्रपत्रिकाः प्रकाश्यन्ते ।

'राष्ट्रे जागृयाम वयम्' इत्येतदर्थं पत्र-पत्रिकाणां बहुविधमुपयोगित्वं स्वतः सिद्धं भवति । तत्र च विशेषेण संस्कृत-संस्कृति-प्रसारणार्थं संस्कृत-सस्कृति-विषयमवलम्ब्य संस्कृतमाध्यमेन प्रकाशितानां पत्र-पत्रिकाणामुपयोगिता स्फुटा । संस्कृत-पत्र-पत्रिकाणां माध्यमेनैवाद्यापि कन्याकुमारीतः प्रारभ्य हिमालयं यावत् भारतं सांस्कृतिकमैक्यमनुभवति । सर्वेषु प्रान्तेषु संस्कृतं जीवितम्, पठितम्, लिखितम्, मुद्रितम्, प्रकाशितं व्यवहृतञ्च अक्षिलक्षीक्रियते । 'संस्कृत मृतम्' इति परिवादोऽपि क्रियात्मकतया समप्रमाणं खण्ड्यते । संस्कृतज्ञानां संस्कृतगिरा निर्मिताः नवीनाः रचनाः संस्कृतरसरसिकानां हृदयनन्दयन्ति । संस्कृतक्षेत्रे यत्र-यत्र यद्यत् कार्यं प्रचलति तत् तत् संस्कृत-पत्र-पत्रिकाणाध्येतारः स्वगृहे एव अवगच्छन्ति । 'सस्कृतं खलु अमृतम्' इति अनुभवन्ति प्रामाणिकतया संस्कृतप्रेमिणः संस्कृत-पत्र-पकिाणां नियमितवाचकाः । नवीनान् लेखान् संपठ्य संस्कृतमयान् भावान् विज्ञाय 'संस्कृतं खलु विश्वभाषा' इति भावनया अभिभूय विश्व-शान्तये संस्कृतप्रसारकर्मणि निरताः भवन्ति सहृदयाः जागृताः जनाः । संस्कृत-पत्र-पत्रिकाणाम् उपयोगित्वं मनसि अवधृत्य गृहेषु संस्कृत-पत्रक्रयणमवश्यं कर्तव्यम् । श्री कृष्णप्रणामी-सस्कृतमहाविद्यालये विश्व-सस्कृत-प्रतिष्ठान-द्वारा समायोजिते समारोहे 'संस्कृत-पत्रक्रयणम्' इति नाम्ना एकः प्रस्तावः पारितः आसीत् । तच्चेदम्–

'भारतीयाः गृहस्थाः अनेन प्रस्तावेनेदमनुरुद्ध्यन्ते यत् प्रतिगृहस्थं स्वगृहे न्यूनान्न्यूनमेकं प्रकाश्यमानं पत्रं पत्रिकां वा संस्कृतस्य अनिवार्यतया ग्राहकत्वेन आनयेत् । संस्कृतस्य गृहे बहिश्च सुखद-वायुमण्डल-निर्माणाय इदमत्यावश्यकं वर्तते ।' इति ।

अस्मिन्नवसरे संस्कृत-पत्रकारितायाः इतिहासोऽपि संक्षेपेण विवेच्यः । एकोनविंशतिशताब्द्याः प्रथमखण्डे अंग्रेजीशासनं प्रायः सम्पूर्णे भारते प्रस्थापित जातम् । शीघ्रमेव मेकालेलार्डस्य क्लर्क-निर्माणपरा शिक्षा-योजना सर्वत्र प्रसारिता । एकस्मिन्नेव क्षणे संस्कृतमर्धचन्द्रं दत्त्वा निस्सारितम्। संस्कृत-विद्यायाः राज्याश्रयः समाप्तिं गतः । नवशासने शिक्षायाः माध्यमभूता आंगलभाषा एव निश्चिता । विकटेऽस्मिन् काले नवीनोपायैः संस्कृतभाषां पुनरुज्जीवितुं संस्कृत-पत्र-पत्रिकाणां परम्परा सर्वप्रथमं नवषष्ट्युत्तराष्टादशतके (1869) वर्षे प्रारब्धा । पञ्चाशदुत्तराष्टादशशतके (1850) वर्षे

लब्धजन्मना बटुहृषीकेशमहोदयेन 'विद्योदयः' इत्याख्यं संस्कृतमासिकपत्रं प्रारब्धम् स्वलोकाभिमुखप्रवृत्त्या ओजपूर्णया भाषया च एतत् प्रशसनीयं पत्रं सर्वत्र सुप्रसिद्धिङ्गतम् हृषीकेशभट्टाचार्यः मूलतः बङ्गीयः आसीत् परं पञ्चाम्बुविश्वविद्यालयस्य संस्कृत-विद्यालये यदा सः प्राध्यापको जातः तदा पञ्चाम्बुविश्वविद्यालयस्य रजिस्ट्रार-पदे विराजमानाना कुलसचिवानां डॉ. लिट्नर महाभागानां प्रोत्साहनेन लाहौरतः पत्रमिदं प्रकाशितम् । यदा भट्टाचार्यः पुनः कलकत्तां प्राप्तः तदा **एतत्पत्रं कलकत्तातः प्रकाशतामभजत् ।** अस्य सम्पादकीय-लेखानां संग्रहः प्रबंधमंजरीनाम्ना पण्डित-पद्मसिंह-शर्मणा सम्पादितः । इत्थमेव काञ्चीस्थलस्य सुप्रसिद्धाः विशिष्टाद्वैतवादिनः प्रतिवादिनःभयंकरमठाधिपतय अनंताचार्याः 'मञ्जुभाषिणी' इत्याख्याम् मासिकीं संस्कृतपत्रिकां प्रारब्धवन्तः । ते अनेकशास्त्रप्रवीणाः न्यायवेदान्तादिशास्त्रीय-ग्रन्थ-सम्पादकाः **आसन् ।** मंजुभाषिणी-पत्रिकायां चित्रकाव्यान्युपन्यासाश्चेति सर्वं मुद्रितम् ।

अस्यामेव परम्परायां सुविख्यातवाणीविलासप्रेस-द्वारा आर कृष्णमाचार्याणां सम्पादकत्वे 'सहृदया' इत्याख्या संस्कृत-पत्रिका प्रकाशिता । अस्याः सम्पादकाः पौर्वात्यपाश्चात्त्य-विद्यानां विद्वासः आसन् । शेक्सपीयर-नाट्यकारस्य आङ्गलरचनाना परिचयः संस्कृतपण्डितेभ्योऽनया पत्रिकयैव प्रदत्तम् । एषा सुन्दर-संस्कृत-पत्रिका एकोनविंशतिशताब्द्याम् पञ्चविंशतिवर्षावधिं यावत् निरन्तरम् प्रकाशिताऽभवत् । कोल्हापुरतः अप्पाशास्त्री राशिवडेकरः संस्कृतचंद्रिका-नाम्नीं मासिक-पत्रिकां सम्पादितवान् । पण्डितेन अम्बिकादत्तव्यासेन विरचितस्य शिवराज-विजयाख्यस्य **ऐतिहासिकोपन्यासस्य** सर्वप्रथमं प्रकाशनस्यामेव पत्रिकायां जातम् । एतैः शास्त्रिवर्यैः 'सूनृतवादिन्' इत्याख्य संस्कृतसाप्ताहिकं पत्रमपि प्रारब्धम् । दौर्भाग्यात् ते यौवने एव दिवंगताः, तदनन्तरम् तत्पत्रप्रकाशनमपि निरुद्धम् । **सम्पूर्णे भारते** प्रसिद्धिङ्गताः जयपुरस्य संस्कृत-विद्वासः महामहोपाध्यायाः पण्डितगिरिधरशर्माणः चतुर्वेदिनः स्वविद्यार्थिकाले एव स्वाभाविकोत्साहेन चतुरधिकैकोनविंशतिशततमे (1904) ईस्वीये वर्षे "संस्कृत-रत्नाकरः" इत्याख्य मासिकं प्रारब्धवन्तः । अस्य मासिकस्य संचालकैः सुप्रसिद्ध-कल्याण-पत्रिकायाः विशेषांकसदृशाः सर्वगुणसम्पन्नाः बृहदाकाराः विशेषांकाः प्रकाशिताः । सँस्कृतमासिकानामितिहासे ईदृशमुदाहरणं दुर्लभम् ।

अस्मिन्नेव काले बंग-भंग-आन्दोलने कलकत्तायाः 'पद्यवाणीः' काशीतः 'मित्रगोष्ठी' तथा 'संस्कृतभारती' प्रयागतश्च 'शारदा' इत्येषां संस्कृतपत्राणां कार्यमपि ऐतिहासिकम् । काशीक्षेत्रतः विद्यासुधानिधिः 'पण्डितः', 'अच्युतः', सुप्रभातम्', 'बल्लरीः', 'सूर्योदयः', 'अमरभारती', एताः पत्रिकाः अपि प्रकाशिताः । अन्यक्षेत्रेषु कोचीनतः 'विज्ञानचितामणिः', ढाकातः 'प्रतिभा', सिंदहैदराबादतः 'कौमुदी', मथुरातः 'संस्कृतभास्करः', लाहौरतः 'उद्योतः', श्रीनगरतः 'श्रीः', नडियादतः 'पीयूषपत्रिका', आगरातश्च 'कालिंदी' इत्येताः संस्कृतपत्रिका अपि यथासमयं प्रकाश्यं नीताः । बनारसतः संस्कृतकालेज-द्वारा प्रारब्धा 'सारस्वतीसुषमा', आन्ध्रसाहित्यपरिषत्पत्रिका, 'मैसूरसंस्कृतकालेजपत्रिका', कलकत्तायाः 'संस्कृतसाहित्य-परिषत्पत्रिका' 'संस्कृतमण्डलपत्रिका' चेति संस्थाभिः **प्रकाशिताः** एताः पत्रिकाः अधिकतरं स्थैर्यं वहन्ति । बेलगांवतः प्रकाशिता 'मंधुरवाणी', अयोध्यायाः 'संस्कृतं

साप्ताहिकम्", कलकत्तायाः 'मजूषा", तिरुवाडीस्थानस्य "उद्यानपत्रिका चैताः संस्कृतपत्रिकाः विविधकष्टानि सोढ्वाऽपि संस्कृतं सेवन्ते ।

परतन्त्रताकालेऽपि एतासां संस्कृत-पत्रिकाणां माध्यमेनैव भारतस्य एकात्मतायाः अखण्डाभिव्यक्तिः जाता । भारतवर्षस्य मूलभूतमैक्यमागलभाषायाः साहाय्यं विना निर्विवादरूपेण सिद्धम् । भिन्न-भिन्न-प्रान्तनिवासिनः विद्वासः संस्कृतमधिकृत्य परस्परमेकत्रिताः भवितुं शक्नुवन्ति । नवशिक्षाप्राप्तविद्वांसः राष्ट्र-भक्ताश्च संस्कृतस्य वैशिष्ट्यं वैज्ञानिकत्वञ्च विज्ञाय निर्भ्रान्ताः उत्साहिनश्च सञ्जाताः । 'संस्कृतं न मृतम्', वस्तुतः 'संस्कृतममृतम्' इति भावः हृदये, जागृतो जातः । एषः सर्वः संस्कृत-पत्र-पत्रिकाणां प्रभाव एव । एषा सर्वा संस्कृतपत्रपत्रिकाणाम् उपयोगिता । वर्तमानेऽपि बहूनि संस्कृत-पत्राणि प्रकाशतां यान्ति । तत्रादौ सुधर्मापत्रिकायाः विषये प्रस्तूयते किञ्चित् । संस्कृतस्य प्रचार-प्रसारार्थं ये कार्यक्रमाः सम्प्रति • अनुष्ठीयन्ते तेभ्यः सर्वेभ्यः दैनिक-संस्कृत-पत्रस्य प्रकाशः अतीव उपयोगी प्रभविष्यति यतो हि भाषा प्रतिदिनमभ्यासस्य विषयः । दशदिनानि अथवा मासं वर्षं वा अभ्यस्ता अपि अनन्तरमप्रयुक्ता च भाषा विस्मृता भवति । संस्कृतज्ञानां स्वाभाषया निरन्तरसम्पर्कस्थापने संस्कृत दैनिकमत्युपकारि सेत्स्यति । तेन च संस्कृतस्य प्रचारे, प्रसारे विकासे च महद् वरदानम् । संस्कृत-दैनिकस्य 'सुधर्मा" इत्यस्य प्रकाशतनं श्री-वरद-राजारयगर-महोदयानां महता त्यागेन संस्कृतं प्रति निष्ठया च कर्णाटके महीशूरपुरीतः (मैसूरतः) । विंशतिवर्षेभ्यः अधिककालार्थं प्राचलत् । किन्तु संस्कृतजगत. पूर्ण-सहकाराऽभावात्, धनाभावात्, तस्य रुग्णत्वात् अन्यान्यकारणाच्च तस्याः प्रकाशनं विगते वत्सरे स्थगितमभूत । इत्थमिदानीं संस्कृतलोकस्य कल्याणार्थं समग्रराष्ट्रस्य ऐक्यार्थं विश्वशान्त्यर्थम् चापि सस्कृतस्य दैनिकपत्रं नितरामपेक्षितं तिष्ठति ।

विश्वस्य संस्कृतदिन-पत्रिकायाः संस्थापकाः साधकाः सम्पादका. सञ्चालकाः श्रीवरदराजाय्यङ्गार्या अगस्तमासस्य पञ्चतारिकाया भानुवासरे (5 8. 90) महाविष्णोः पदसन्निधिं प्राप्ता इति भवन्तो जानन्त्येव । तेन विना तृणमपि न चलतीति जानन्तोऽपि वय लौकिकाः मायाग्रस्ताः विषीदामः, दुःखमनुभवामः, शोकं प्रकटीकुर्मः । वर्तन्ते परस्सहस्राः संस्कृतपण्डिताः, प्राध्यापकाः, किन्तु यत्कर्तुमन्यः कोऽपि न धैर्यमकरोत्, तन्महत्कार्यमय्यङ्गार्यमहोदयैः कृत्वा दर्शितम् । तेषु सत्त्वशक्तिरप्रतिमा अवर्तत । तेनैव ते तादृशं महाकार्यं साधितवन्तः । सर्वत्र एकमेव ध्येयम्, संस्कृत-भाषासंवर्धनम्, भारतसंस्कृतिरक्षणञ्च । सुधर्मापत्रमाध्यमेन संस्कृतस्य दैनन्दिनप्रयोगः प्रदर्शितः । एष सर्वथा व्यावहारिकः प्रयासः स्तुत्यः एव । 1970 ईस्वीये प्रारब्धं पत्रमिदं भविष्यति अपि प्रतिदिनं प्रकाशितं भवेदेतदर्थं संमिल्य प्रयासः करणीयः ।

हरियाणा-प्रदेशे अपि एकपात्राभिनयरीत्या सततं संस्कृतप्रसारं कुर्वन्तः प्रो. सत्यदेववर्माणः हितसाधिका-इत्याख्यं संस्कृतपाक्षिकं यमुनानगरतः प्रकाशयन्ति । अस्य पत्रस्य प्रकाशनम् 1988 ईस्वीय-वर्षे दिसम्बरमासस्य पञ्चदशतारिकातः नियमितं प्रचलति । प्रतिदिनमार्थिकानि कष्टानि जरीजृम्भन्ते । एकैकस्यापि वस्तुनो मूल्यं दिने दिने वर्धते । धनलाभमपश्यन्तो लेखकाः नाती-

वोत्साहिनः । एवं सत्यपि अनुरागेण, प्रचोदनेन, प्रार्थनेन, याचनेन येन केनापि मार्गेण च लेखकानां ग्राहकाणां च हृदयं वशीकृत्य पाक्षिकमिदं प्रचाल्यते ।

'विश्वभाषा' इत्याख्यं विश्वसंस्कृत-प्रतिष्ठानस्य मुखपत्रं वर्तते । अस्य प्रधानसम्पादकः पण्डितः गुलामदस्तगीर-अब्बास-अली-विराजदारोऽस्ति । एषा अन्ताराष्ट्रिया त्रैमासिकी संस्कृत-पत्रिका विश्वे संस्कृतं विश्वभाषापदे स्थापयितुं प्रयतते । 'अर्वाचीनसंस्कृतम्' इत्याख्यमर्वाचीनसंस्कृत-परकं त्रैमासिकं पत्रं श्रीमतां विद्वद्वरिष्ठानां कविमल्लानां श्रीशारदाम्बावरदपुत्राणां डॉ रमाकान्त-शुक्लमहाभागानां सम्पादकत्वे देववाणी-परिषद्-द्वारा दिल्लीतः नियमितरूपेण प्रकाश्यते । अर्वाचीनां संस्कृतविदुषामर्वाचीनाः संस्कृतरचनाः अर्वाचीनसंस्कृतपत्रिकायां दृग्गोचरीभवन्ति ।

सरलसंस्कृतं व्यवहार्यम् । संस्कृतमद्यापि जनसामान्यस्य व्यवहारभाषा भवितुमर्हति यदि जनाः संस्कृतभाषणे भीतिं लज्जां च परिहरेयुः । संस्कृतव्याकरणं किञ्चिदिव सरलमपि करणीयम् । सन्धयः समासाश्च संस्कृताध्ययनविषये दुरूहतां समुत्पादयन्ति । समस्तासु अर्वाचीन-भाषासु प्रत्येकः शब्दः पृथक्तया लिख्यते । अनेन अध्ययनं सुकरं भवति । यदि अस्माकं सम्पूर्ण-वाङ्मयमनेन विधिना पुनर्लिखितं स्यात् तर्हि संस्कृताध्ययनमत्यन्तं सरलं भविष्यति । अन्यच्च आधुनिकं विज्ञानं संस्कृते न विद्यते । अतः संस्कृताध्ययनस्य किमपि क्षेत्र नास्ति । संस्कृत-पत्रपत्रिकासु विद्वज्जनैः आधुनिकान् वैज्ञानिकान् विषयान् समाश्रित्य लेखन कार्यम् । मन्ये कार्यमिद सुकर नास्ति । यतो हि संस्कृतज्ञाः प्रायः वैज्ञानिकाः न भवन्ति, नैव वैज्ञानिकाश्च संस्कृतज्ञाः । एतदर्थं प्रथम वैज्ञानिक-विषयेषु सामान्यलेखाः लेखनीयाः । वैज्ञानिकानाञ्च जीवनपरिचयः वैज्ञानिक- साहित्यस्य इतिहासश्च संस्कृते प्रस्तोतव्यः । प्राचीनकाले ये वैज्ञानिकविषयाः गणित-ज्योतिष-आयुर्वेद- यन्त्रशास्त्राणि च भारते अभूवन्, तेषां नूतनदृष्ट्या समीक्षणञ्च कार्यम् । ततः आधुनिकविषयेषु भौतिकविज्ञान-रसायन-विज्ञान-जीवविज्ञान-वनस्पति-विज्ञानादिषु तेषाञ्च विविधासु शाखासु प्रशाखासु अनूदिताः मौलिकाश्च ग्रन्थाः विरचनीयाः । इत्थं संस्कृते संस्कृतपत्रपत्रिकासु अवतीर्णं विज्ञानं लोकदृष्टिं संस्कृतं प्रति आकर्षेत् । इयमेव संस्कृतपत्रपत्रिकाणामुपयोगिता । संस्कृतस्य संस्कृतपत्रपत्रिकाणाञ्च प्रसाराय इदमुपरि सक्षेपेण यत्किञ्चित् मया निवेदितम् ।

अत्राहमिदमपि लिखितुकामोऽस्मि यत् प्रादेशिकभाषासु हिन्दीभाषायामाङ्गलभाषायाञ्च यानि समाचारपत्राणि प्रकाशितानि भवन्ति तेषा व्यवस्थापकैः सह सम्पर्कं विधाय अयमपि उद्योगः कर्तव्यः यत् तेषु पत्रेषु कतिपयस्तम्भाः सरलया ललितया च संस्कृतभाषया केषाचिद् लोकप्रियाणा विषयाणां प्रकाशनाय विनियोक्तव्याः । यदि तेषां पत्राणां कतिषु च स्तम्भेषु संस्कृतं भविष्यति तदा तत्पत्रपाठकेषु बहूनां तत्र दृष्टिपातो भविष्यति । क्रमेण च तद्द्वारा बहूनां रुचेः जागरणं सम्पत्स्यते । इत्थमयमपि प्रकारः संस्कृत-प्रचाराय सफलो भवितुमर्हति । संस्कृतपत्रपत्रिकाः तत्सम्पादकाश्च अस्या दिशि बहुकार्यं कर्तुं शक्नुवन्ति । ममायमनुभवो विश्वाशश्च विद्यते यद् इदानीमपि संस्कृत-शिक्षायां जनतायाः आदरो वर्तते । जनता संस्कृतं शिक्षितुं कामयते । परं संस्कृतशिक्षायाः युगानुरूपा व्यवस्था नास्ति । संस्कृते

नवयुगस्य विषयाणा सन्निवेशो नास्ति । संस्कृते सरलानां रुचिवर्धकाणा नूतनग्रन्थानां रचना न जायते । एतत्सर्वं संस्कृतपत्रपत्रिकाणां माध्यमेनैव कर्तुं सम्भवम् । इदमेव संस्कृतपत्रपत्रिकाणामुपयोगित्वम् ।

इदं सर्वं कार्यजातं हिन्दीभाषाया: आङ्गलभाषाया: भाषान्तराणा वा अध्यापका: अध्येतारश्च न करिष्यन्ति, इदं तु संस्कृतस्य पण्डितै:, संस्कृतस्य विद्यार्थिभि: संस्कृतोपजीविभि: साधुप्रभृतिभिरेव च कर्तव्यं भविष्यति । अतो मे भवत्सु विनयपूर्णा इयमभ्यर्थना विद्यते यत् सर्वे निद्रां विमुच्य परावलम्बनवृतिं परित्यज्य कर्तव्यभावनां पुरस्कृत्य, कालप्रातिकूल्यमनाक्षिप्य, "सर्वं भाग्यात् प्रवर्तते", "सर्वमीश्वरो घटयति" इत्येवं विधाकर्मण्यताप्रदां धारणामवधीर्य,

**"उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु ।**
**भविष्यतीत्येव मन: कृत्वा सततमव्यथै: ॥"**

इति व्यासोक्तिं पाथेयीकृत्य च सोत्साहा: कटिबद्धा: सन्तो द्रुततरं प्रवर्तन्ता येन सुरभारती संसारे प्राप्तपदा भूत्वा आत्मनोऽक्षय्यकोषेण विश्वमानवान् तर्पयन्ती भारतवर्षं जगद्गुरुपदे पुन: प्रतिष्ठापयितुं प्रभवेत् । इति ।

अन्या: अपि सस्कृतपत्रपत्रिका: भारतवर्षे प्रकाश्यन्ते । उपलब्धाना सस्कृतपत्रपत्रिकाणामेका सूची प्रस्तूयते । तत्र चेत् संशोधनमपेक्ष्यते, कौशल-सस्कृत-केन्द्रम् (शारदोद्यानम्, कुरुक्षेत्रम्) प्रति तत्सूच्यमिति ।

## संस्कृत-पत्र-पत्रिकाणां सूची

| पत्रिकाया: नाम | प्राप्तिस्थानम् |
|---|---|
| 1. सुधर्मा (दैनिकीपत्रिका) | 561, रामचन्द्र-अग्रहारम्, श्री-कण्ठ-पावरप्रेस:, मैसूर:, 570004 |
| 2. संस्कृतभवितव्यम् (साप्ताहिकी पत्रिका) | संस्कृतभवनम्, पश्चिमन्यायालय-मार्ग:, नागपुरम्, 440001 |
| 3. गाण्डीवम् (साप्ताहिकी पत्रिका) | गाण्डीवकार्यालय:, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय:, वाराणसी, 221002 |
| 4. युगगति: (साप्ताहिकी पत्रिका) | बक्शीपुरम्, गोरक्षपुरम्, 273001 |
| 5. शारदा (पाक्षिकी पत्रिका) | 2, झेलमपत्रकारनगरी, पुने–16 |
| 6. संस्कृतसाकेत: (पाक्षिकी पत्रिका) | साकेतकार्यालयं:, अखिलभारतीयविद्वत्समिति:, अयोध्या |
| 7. सस्कृतश्री: (पाक्षिकी पत्रिका) | 7, श्रीरामपुरम् 22, वीरेश्वरसम्पर्कमार्ग:, श्रीरङ्गम्, 72007 |
| 8. गैर्वाणी (मासिकी पत्रिका) | एन. आर. एअरविजयप्रेस:, चितूर:, आन्ध्रप्रदेश: 517002, संस्कृतभाषाप्रचारिणी सभा |

| | |
|---|---|
| ९. सूर्योदयः (मासिकी पत्रिका) | भारतधर्ममहामण्डलम् जगतगञ्जः, (लहुराबीरः) वाराणसी |
| 10. भारती (मासिकी पत्रिका) | भारती-भवनम्, वी-15, नवकालोनी, जयपुरम्, 300201 |
| 11. संस्कृतामृतम् (मासिकी पत्रिका) | 1418, बाजारगुलियानः, दिल्ली, 110006 |
| 12. पारिजातम् (मासिकी पत्रिका) | 105/194, प्रेम-नगरम्, कर्णपुरम्, 208001 |
| 13. गीर्वाणसुधा (मासिकी पत्रिका) | इन्दिरा-निवासः, अ. बो. स्ट्रीटमार्गः, बम्बईनगरम्, 400004 |
| 14. दिव्यज्योतिः (मासिकी पत्रिका) | आनन्दलॉजः, जाखू, शिमला -1 |
| 15 भारतोदयः (मासिकी पत्रिका) | गुरुकुलमहाविद्यालयः, ज्वालापुरम्, हरिद्वारम् सहारनपुरम्, उत्तरप्रदेशः, 249605 |
| 16 बालसंस्कृतम् (मासिकी पत्रिका) | मनीलालमेहतामार्गः, लालबहादुरशास्त्रीपथः, घाटकोपरः, बम्बई नगरम्, 400086 |
| 17. प्रणवपारिजातः (मासिकी पत्रिका) | श्रीसीतारामवैदिकमहाविद्यालयः, 72, पी. डब्ल्यू. डी. मार्गः, कलकत्ता-35 |
| 18. शारदा (मासिकी पत्रिका) | पो. बा. 750, शारदाकार्यालयः, पूने, 411030 |
| 19 चन्दमामा (मासिकी पत्रिका) | (डाल्टन एजेंसी), वाडाल्पलनी, मद्रास-26 |
| 20. सर्दगन्धा (मासिकी पत्रिका) | माईजीमन्दिरम्, असरफाबादम्, लक्ष्मणपुरम्, लखनऊ नगरम्, उत्तरप्रदेशः, 226003 |
| 21. संस्कृतसाहित्यपरिषत्पत्रिका (मासिकी पत्रिका) | 168/1, राजदीनेन्द्रस्ट्रीटमार्गः, श्यामबाजारः, कलकत्ता, बंगाल–प्रदेशः |
| 22. संस्कृतप्रचारकम् (मासिकी पत्रिका) | 550, आनन्दविहारः, मौजपुरम्, दिल्ली-नगरम् 220023 |
| 23. ललिता (मासिकी पत्रिका) | कविभारती, किशोरविद्यानिकेतनम्, वी-2/236 ए, भदैनी, वाराणसी |
| 24. मंजूषा (मासिकी पत्रिका) | क्षितीशचन्द्रचट्टोपाध्यायः, द्वारा-4, भूपेन्द्रवसुऐवैन्यु, कलकत्ता-4 |

| | |
|---|---|
| 25. श्रीः (मासिकी पत्रिका) | नित्यानन्दशास्त्री, सुन्वारबागः, श्री-नगरम् काश्मीरः |
| 26. भारतश्रीः (मासिकी पत्रिका) | श्रीधरशास्त्री, भारतीपरिषद्, प्रयागः |
| 27. साम्मनस्यम् (मासिकी पत्रिका) | गुजरातसंस्कृतपरिषद्, हिमजनसमाजकल्याणकेन्द्रम् पालडी, अहमादाबाद, गुजरातः |
| 28. उद्यानपत्रिका (मासिकी पत्रिका) | 113, साउथमाडलस्ट्रीटमार्गः, तिरूपतिः, आन्ध्र प्रदेशः |
| 29. सत्यानन्दम् (मासिकी पत्रिका) | 1, इब्राहिमपुररोडमार्गः, यादवपुरम्, कलकत्ता-नगरम्, 700032 |
| 30. भारतमुद्रा (द्वैमासिकी पत्रिका) | पुराणनाकारः, त्रिचूरः, केरलम्, 680551 |
| 31. मालवमयूरः (द्वैमासिकी पत्रिंका) | रूद्रदेवत्रिपाठी, मन्दसौरः, मध्यप्रदेशः |
| 32. वेदान्तसन्देशः (द्वैमासिकी पत्रिका) | स्वामीमनोहरदासः, 2/132, बलागंजः, कानपुरम् |
| 33. लोकसंस्कृतम् (त्रैमासिकी पत्रिका) | सस्कृतकार्यालयः, श्री-अरविन्दाश्रम, पाण्डीचेरी, 605002 |
| 34. सारस्वतीसुषमा (त्रैमासिकी पत्रिका) | सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, 221002 |
| 35. सागरिका (त्रैमासिकी पत्रिका) | सागरिका-समितिः, गौरनगरम्, सागरः, (मध्यप्रदेशः) |
| 36. अजस्रा (त्रैमासिकी पत्रिका) | अखिलभारतीय-सस्कृतपरिषद्, महात्मागाधीमार्गः, हजरतगजः, लखनऊ, उत्तरप्रदेशः |
| 37. परमार्थसुधा (त्रैमासिकी पत्रिका) | सार्वभौमसंस्कृतप्रचारकार्यालयः, 38/110, हौजकटोरा, वाराणसी (उत्तरप्रदेशः) |
| 38. विशवसंस्कृतम् (त्रैमासिकी पत्रिका) | विश्वेश्वरानन्दवैदिकशोधसंस्थानम् साधु-आश्रमः, होशियारपुरम्, पंजाबः, (5102) |
| 39. संस्कृतसम्मेलनम् (त्रैमासिकी पत्रिका) | श्रीरामनिरञ्जनमुरारकासंस्कृतमहाविद्यालयः चौकपटनानगरम् (बिहारः) |
| 40. गुञ्जारवः (त्रैमासिकी पत्रिका) | कालेश्वरमन्दिरम्, घुमेरगल्ली, अहमदनगरम्, महाराष्ट्रः प्रदेशः |

| | |
|---|---|
| 41. विश्वभाषा (त्रैमासिकी पत्रिका) | विश्वसंस्कृतप्रतिष्ठानम्, दुर्गरामनगरम्, वाराणसी |
| 42. अर्वाचीनसंस्कृतम् (त्रैमासिकी पत्रिका) | देववाणीपरिषद्, 6-वाणीविहारः, नवदेहली, 110058 |
| 43. उत्कलोदयः (त्रैमासिकी पत्रिका) | ए/99, सेक्टर-13, राउरकेला (उत्कलः) उड़ीसा-नगरम्, 760009 |
| 44. संविद् (त्रैमासिकी पत्रिका) | भारतीयविद्याभवनम्, कुलपति के. एम. मुंशीमार्गः, बम्बई-नगरम्। |
| 45. संगमनी (त्रैमासिकी पत्रिका) | संस्कृतसाहित्यपरिषद्, दारागंजः, प्रयागः |
| 46. स्वरमगला (त्रैमासिकी पत्रिका) | राजस्थानसाहित्य-अकादमी, उदयपुरम्, राजस्थानम्, 313001 |
| 47. दिग्दर्शिनी (त्रैमासिकी पत्रिका) | उत्कलसंस्कृतगवेषणासमाजः, पुरी, उड़ीसा नगरम्, 752001 |
| 48. मनीषा (त्रैमासिकी पत्रिका) | श्रीकामेश्वर-सिहदरभंगा, सस्कृतविश्वविद्यालयः, दरभंगा, बिहार |
| 49. मनीषासूत्रम (त्रैमासिकी पत्रिका) | दारागजः, प्रयागः, इलाहाबादः, उत्तर-प्रदेशः, 211001 |
| 50. कामधेनुः (त्रैमासिकी पत्रिका) | भारतविद्यापीठम्, पा. ओ. इरनैलियर त्रिचुर (केरल) 680501 |
| 51. दूर्वा (त्रैमासिकी पत्रिका) | मध्यप्रदेश-अकादमी, चारबंगलामार्गः, सिविलमाईन, भोपालः, मध्य-प्रदेशः, 462002 |
| 52. ऋतम् (त्रैमासिकी पत्रिका) | अखिलभरतीयसंस्कृतपरिषद्, हजरतगंजः, लखनऊ-नगरम्, उत्तरप्रदेशः, 226001 |
| 53. श्रेयः (त्रैमासिकी पत्रिका) | डॉ रामदतभारद्वाजः, सी. 3/31 ए, राजौरीगार्डनः, नवदेहलीनगरम् |
| 54. प्राच्यभारती (षाण्मासिकी पत्रिका) | असमसंस्कृतसमितिः, काहिलीपाड़ा, गुवाहाटी, आसाम-प्रदेश. |
| 55. भास्वती (षाण्मासिकी पत्रिका) | संस्कृतविभागः, काशीविद्यापीठः, वाराणसी, उत्तर प्रदेशः |
| 56. संस्कृतप्रतिभा (षाण्मासिकी पत्रिका) | साहित्य-अकादमी, रवीन्द्रभवनमार्गः, नवदेहली-नगरम्। |

| | |
|---|---|
| 57. सुरभारती (षाण्मासिकी पत्रिका) | उस्मानियायूनिवर्सिटी-कैम्पस, हैदराबाद, 500007 |
| 58. शोधप्रभाः (षाण्मासिकी पत्रिका) | श्री–लालबहादुरकेन्द्रीयसंस्कृतविद्यापीठम्, शहीदमीतसिंहमार्गः, कटवारियासरायः नवदेहली-नगरम्, 110016 |
| 59. प्राच्यज्योतिः (षाण्मासिकी पत्रिका) | संस्कृतप्राच्यविद्यासंस्थानम्, कुरुक्षेत्रविश्वविद्यालयः, कुरुक्षेत्रम्, 132119 |
| 60. भारतीयविद्या (षाण्मासिकी पत्रिका) | भारतीयविद्याभवनम्, कुलपति के. एम. मुंशी मार्गः, बम्बई नगरम्, 400007 |
| 61. संस्कृत-वीणा (षाण्मासिकी पत्रिका) | शारदोद्यानम् कुरुक्षेत्रम्, हरियाणाप्रदेशः, 132118 |
| 62. एनल्स ऑफ्ट भण्डारकर ओरियण्टल रिसर्च इन्स्टीच्यूट | पूना, 411002 |
| 63. जनरल ऑफऑरियण्टल रिसर्च इन्स्टीच्यूट | बड़ौदा, गुजरात-प्रदेशः |
| 64. द जनरल ऑफ गंगानाथ झा रिसर्च इन्स्टीच्यूट | इलाहाबादः, उत्तरप्रदेशः |
| 65. द जनरल ऑफ संस्कृत अकादमी | ओस्मानियाविश्वविद्यालयः, हैदराबादः, आन्ध्र-प्रदेशः |
| 66. द जनरल ऑफ द मैसूर ओरियण्टलिस्ट्स ओरियण्टल रिसर्च इन्स्टीच्यूट | मैंसूरः, कर्नाटक प्रदेशः |
| 67. नवप्रभातम् (नवीनम् दैनिकम्) | 117/81, ए, न्यूब्लाकः, शारदानगरम् कानपुरम्, उत्तरप्रदेशः, 208025 |

# "त्रिभाषा फार्मूले में संस्कृत का स्थान गुरुदक्षिणा के रूप में मुझे दे दो" झोली पसारकर डॉ. सम्पूर्णानन्द जी की श्री शास्त्री जी से मांग

डॉ. सम्पूर्णानन्द संस्कृत के महान् मनीषी थे । इस भाषा के वाङ्मय की अगाधता में उनकी गहरी पैठ थी । सम्पूर्णानन्द संस्कृत विश्वविद्यालय की स्थापना उनकी इसी निष्ठा की परिणति थी । यह सुविदित तथ्य है कि भारत के तत्कालीन शिक्षा मंत्री श्री मौलाना आजाद किसी एक भाषा के विश्वविद्यालय की स्थापना नहीं चाहते थे । लेकिन डॉ. सम्पूर्णानन्द ने तत्कालीन प्रधानमंत्री पं जवाहर लाल नेहरु से कहा कि उत्तर प्रदेश में इतनी क्षमता है कि वह एक विश्वविद्यालय अपने आप भी चला सकता है और अपने दृढ संकल्प के आधार पर उन्होंने यहाँ विश्वविद्यालय की स्थापना कर दी । यह उन जैसा त्याग, तपस्या और विद्वत्ता से सम्पन्न व्यक्ति ही कर सकता था । यह प्रसन्नता की बात है कि उत्तर प्रदेश शासन ने उस विश्वविद्यालय के साथ उनका नाम जोड़ दिया और आज वह सम्पूर्णानन्द संस्कृत विश्वविद्यालय के रूप में सारे भारत में सस्कृत के एक कीर्तिस्तम्भ की तरह विराजमान है ।

यही विश्वविद्यालय नहीं, अपितु कामेश्वर सिंह दरभगा सस्कृत विश्वविद्यालय की स्थापना के पीछे भी उनकी प्रेरणा मूल आधार है । मैं स्वय पटना में उपस्थित था जब महाराजाधिराज कामेश्वर सिह की स्वागताध्यक्षता मे आयोजित अखिल भारतीय संस्कृत साहित्य सम्मेलन के पटना अधिवेशन में डॉ. सम्पूर्णानन्द जी ने दरभगा में संस्कृत विश्वविद्यालय की स्थापना की अपील की थी ।

डॉ. सम्पूर्णानन्द जी का व्यक्तित्व अनेक गुणों का भण्डार था । वे उच्च कोटि के विचारक, महान् दार्शनिक, अग्रणी स्वतन्त्रता सेनानी, सफल प्रशासक होने के साथ-साथ त्याग की मूर्ति थे । कभी उन्होंने सत्ता के लिए मान्यताओ विचारों और सिद्धान्तों को समर्पित नहीं किया । इसके लिए उत्तर प्रदेश जैसे महान् राज्य के मुख्यमंत्री जैसे गौरवपूर्ण पद को भी उन्होंने सहजता के साथ छोड़ दिया । हम उनके व्यक्तित्व की सस्कृत-महत्ता की यहाँ विशेष चर्चा कर रहे हैं । सारे देश में सस्कृत की प्रत्येक प्रवृत्ति और कार्यकर्ता को उन्होंने सरक्षण प्रदान किया । वे संस्कृत के लिए समर्पित थे और संस्कृत संस्था अथवा संस्कृत के व्यक्ति के उपकार के लिए सदा तत्पर रहते थे । हम सब लोगों

